Published under the Esteemed Patronage

OF

HIS HOLINESS SRI CHANDRASEKHARA BHARATI SWAMIGAL

(The Jagadguru of Sringeri)

# SRUTIMATODYOTA

(LAGHU and GURU)

BY

SRI TRYAMBAKA SASTRY.






SRIRANGAM:

SRI VANI VILAS PRESS.

1916.

ॐ



# ॥ श्रुतिमतोद्योतः ॥

( लघुः, गुरुश्च )

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पादपूज्य
चरणानुग्रहलब्धब्रह्मविद्यावैशद्येन श्रीमद्ब्रह्मानन्द
सरस्वतीसारस्वतसाम्राज्यानुभवसमेधमानयुक्ति-
शतधारोत्सारितविपक्षगिरिनिचयेन

**भट्टत्र्यम्बकशास्त्रिणा**

विरचितः ।




**श्रीरङ्गम्**

श्रीवाणीविलासमुद्रायन्त्रालये

संमुद्रितः ।

**१९१६.**




॥ ॐ ॥

# ॥ श्रुतिमतोद्योतः ॥

पूर्णज्ञानाय निर्भेदपरमानन्दमूर्तये ।
व्यासशंकररूपाय श्रीपरब्रह्मणे नमः ॥

विमतो भिन्नः मुक्तत्वात् संप्रतिपन्नवत् इत्युक्ते, शुद्धचिन्मात्रे मुक्ते भेदस्याभ्युपगमात् सिद्धसाधनम्; मुक्तिदशायाः धर्मिविशेषणत्वे परं प्रत्यसिद्धिः, मुक्तौ कालानभ्युपगमात्; मुक्तिदशायां कालो नाभ्युपेयत इति व्याहतमिति चेत्, न; तत्त्वज्ञानस्य स्वसमानविषयकस्वसमानाधिकरणाज्ञानतत्प्रयुक्तदृश्याधिकरणकालपूर्वत्वाभावनियमाभ्युपगमेन फलतः तन्निरासात्। एतेन मुक्तिकालावच्छिन्नभेदवत्त्वं साध्यमिति परास्तम्, परं प्रति साध्याप्रसिद्धेः । अत एव न पारमार्थिकभेदोऽपि साधनार्हः । यत्तु स्वज्ञानाबाध्यभेदः साध्यत इति, तदसत्; स्वशब्देन पक्षोक्तौ साध्यप्रसिद्धेः, दृष्टान्तोक्तौ सिद्धसाधनात् । यदि च मण्डनमते चरमदृश्यध्वंसस्य मुक्तिकालत्वसंभवात् तस्य

पक्षतावच्छेदकत्वं वाच्यम् अतो न सिद्धसाधनमित्युच्यते, तदा अनृतव्यावृत्त्यादेः तत्काले ब्रह्मणि अभ्युपगमात् सिद्धसाधनमेव ॥

यत्तु मुक्तत्वादित्यस्य बन्धसंसर्गाभाववत्त्वादित्यर्थ इति, तदसत्, अभाववत्त्वस्यैव हेतुत्वसंभवे इतरांशवैयर्थ्यात् । यदत्र पण्डितंमन्येनोक्तम्– तथा सति प्रमेयत्वादीनां केवलान्वयित्वभङ्गप्रसङ्गः, तत्रापि विषयताया एव केवलान्वयित्वमित्यस्य सुवचत्वादिति— तदुपहसनीयमेव ; स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितधर्मस्यैव व्याप्यतावच्छेदकतया प्राचां मते व्याप्यत्वासिद्धेरत्रापि दुर्वारत्वात् नव्यमतेऽपि आधिक्येन निग्रहे तस्यानुत्तरत्वात्; अभ्युपगतश्च तान्त्रिकैराधिक्येन निग्रहः ; स च हेत्वाधिक्यवत् हेतुविशेषणाधिक्येऽपि तुल्यः ; अन्यथा वह्निमान् काकदन्तविषयकज्ञानविषयधूमवत्त्वादित्यपि प्रयुञ्जानो न निगृह्येत एतेन बन्धात्यन्ताभावहेतुतापक्षोऽपि प्रत्युक्तः । अनुयोगितासंबन्धेन लघोर्बन्धस्य हेतुविशेषणत्वं तु कथंचित् युक्तम् ॥

यदपि मुक्त इति पक्षनिर्देशे सिद्धसाधनस्य संसारान्मुक्त इत्युक्तौ अप्रसिद्धविशेष्यत्वादेः शङ्का स्यादिति तन्नि-

रासाय विमतग्रहणम् । तथाहि— यदि विशेष्यो मुक्तात्मा अप्रसिद्ध. स्यात्, तदा किमाश्रया विमतिः स्यात्, यदि विशेषण भेदोऽप्रसिद्ध स्यात्, तदा किमुल्लेखिनी विमतिः स्यात्, यदि वा मुक्तात्मनि भेदः सिद्धो बाधितो वा भवेत्, तदाप्यन्यतरपक्षनिश्चयात् न विमतिः स्यात्; अस्ति चेयम्, अतो नाप्रसिद्धविशेष्यत्वाप्रसिद्धविशेषणत्वसिद्धार्थत्वप्रमाणबाधा इति, एतेन उदाहरणेऽपि संप्रतिपन्नग्रहणस्य साध्यसाधनवैकल्यापुद्धार. प्रयोजन व्याख्यातम्; अन्यथा यथा निगलमुक्त इत्यवक्ष्यदिति; तदपि न, विमत इत्युक्तिमात्रेणोक्तशङ्कानिरासे विमतं मिथ्या दृश्यत्वात् संप्रतिपन्नवत् इत्युक्तिमात्रेणोक्तदोषनिराकरणसंभवात् तत्र तत्र अप्रसिद्धविशेषणत्वाद्युद्भावनासगते । प्रकारान्तरेणोद्भावनपरिहारौ तु प्रकृतेऽपि तुल्यौ । यत्तु मुक्तस्य भेदमात्रानङ्गीकारेण आक्षिपन्तं प्रति प्रकृतप्रयोग, नातः सिद्धसाधनतादीति, तन्न, मुक्ते मुक्त्यन्यदशाया भेदमात्रानङ्गीकर्तु वादिन एव अभावात्; शुद्धाद्वैते मुक्तौ कालानभ्युपगमात् भावाद्वैते सिद्धसाधनस्य दुरुद्धरत्वात्। यदपि प्रागवस्थाया येन भेदेन विशिष्ट, तेनैव भेदेन मोक्षेऽपीत्ययमर्थो विवक्षित इति न कश्चिद्दोष इति, तदपि विवक्षितविवेचने

दूषितप्रायम् ॥

अथ परमात्मप्रतियोगिकभेदोऽत्र साध्यः; बन्धप्रध्वंसाधिकरणत्वं हेतुः; अतो न कोऽपि दोष इति चेत्, मैवम्; परमात्मशब्देन जगत्कर्तृत्वादिविशिष्टविवक्षायां सिद्धसाधनात्; सत्यादिपदतात्पर्यविषयविवक्षायां मुक्ते तद्भेदस्य संदिग्धतया संदिग्धानेकान्तत्वस्य दुर्वारत्वात्; अनुकूलतर्कास्फूर्तौ व्यभिचारसंशयस्यापि दूषकत्वात्; स्पष्टमेव तदनुमानदीधितौ । यत्तु अनवच्छिन्नविशेषणतया भेदवत्त्वं साध्यम्, अतो न सिद्धसाधनतेति, तदसत्; यावत्कालमनुवर्तमानाया अनृतादिव्यावृत्ते शुद्धचिति अभ्युपगमेन सिद्धसाधनतादुद्धारात् । केचित्तु निगलमुक्तिसाधारणमुक्तिमात्रविवक्षायां सिद्धसाधनमप्रत्यूहम्, मुख्यमुक्तिविवक्षाया दृष्टान्ते साध्यवैकल्यम्, निगलमुक्तस्य मुक्तिकालाप्रसिद्धत्वात्; निगलबद्धात्मापि शुद्धात्मना मुक्तस्त्वन्वयीति चेत्, एवं सति नासौ दृष्टान्तः, संदिग्धसाध्यकत्वात्— इति मुक्तिकालावच्छिन्नभेदवत्त्वसाधनमयुक्तमित्यपि वदन्ति ॥

नन्वत्र न सिद्धसाधनमुद्भावनार्हम्, त्वया ब्रह्मातिरिक्तस्य सर्वस्याप्यप्रामाणिकत्वाभ्युपगमात्; न ह्यप्रामाणिकार्थाभ्युपगमेन सिद्धसाधनोपन्यासः प्रेक्षावतां युक्तः; तथा

सत्यतिप्रसङ्गादिति चेत्, मैवम्; सिद्धसाधनतायां पक्षे साध्यतावच्छेदकावच्छिन्नसाध्यस्याभ्युपगतत्वमेव तन्त्रम्; न तु तस्य प्रामाणिकत्वमपि । न चातिप्रसङ्गः; तस्यानिरूपणात् । न च पर्वतो वह्निमान् धूमादित्यादौ धर्मिज्ञानाबाध्यवह्न्यभ्युपगमशून्येनापि शुक्त्यादावारोपितवह्निमादाय सिद्धसाधनापादनात्मा सः; तत्सर्गतः शब्दप्रवृत्तौ व्यवहारकालाबाध्यत्वस्योपाधितया वह्निपदेन व्यवहारकालाबाध्यवह्नेरेवोपस्थिततया तस्य च पर्वतादावनभ्युपगतत्वेन सिद्धसाधनस्योद्भावनायोगात्; वह्नित्वमात्रस्य साध्यतावच्छेदकत्वे तु भवेदेव सिद्धसाधनम्, विशिष्टबुद्धौ संसर्गतावच्छेदकतया अखण्डोपाधिरूपस्य अन्यस्य वा व्यावहारिकत्वस्य भानोपगमात् शुक्त्यादावारोपितवह्न्यादेः पर्वतादावुक्तसंयोगाभावेनानुमितेरुद्देश्याया उक्तधर्मावच्छिन्नविषयताकत्वेन अभ्युपगततया सिद्धसाधनस्योद्भावनायोगात्; संयोगमात्रस्य साध्यतावच्छेदकसंबन्धत्वे तु भवेदेव ॥

ननु भेदस्यापारमार्थिकत्वे शुद्धचिन्मात्रे मुक्ते तद्धत्वाभ्युपगम एव नोचितः, सदसतोः संबन्धायोगादसतो निरधिकरणत्वाच्च; मैवम्, अत्यन्तासत एव तथात्वाभ्युपगमात् भेदस्य चानिर्वाच्यत्वात् । न चानिर्वाच्यत्वासिद्धिः, व्या-

तिबाधाभ्यामेव तत्सिद्धेः; तथा हि— शुक्ताविदं रजत मिति भ्रमप्रकारो न सन्, बाध्यत्वात्– इति तु तत्राप्यनुमतम् । नाप्यसन्नामन्, अपरोक्षत्वानुपपत्तेः; प्रत्यक्षं हीन्द्रियार्थसंनिकर्षजन्यम्; न चासतेन्द्रियस्य संनिकर्षः संभवति । किं च, असद्रजतं रजतत्वेन भाति, न वा नाद्यः, अन्यथाख्यात्यापत्तेः, तुल्ययुक्त्या भ्रमे परमार्थरजतस्यापि भानसंभवाच्च । न द्वितीयः, भ्रमाद्रजतार्थिप्रवृत्त्यनुपपत्तेः; तस्येष्टतावच्छेदकधर्मसंसर्गानवगाहित्वात् । विस्तृतं चैतदन्यत्र ॥

यत्तु भ्रमे अधिष्ठानस्यैव विषयता, स च केवलं स्वविषयं शुक्तिकाशकलमलन्वासद्रजतात्मनावगाहत इत्यसद्रजतविषय उच्यते; रजतज्ञानस्य शुक्तिविषयत्वं संविद्विरुद्धमिति चेत्, न; रजतज्ञानस्येत्यस्य कोऽर्थः? यदि रजतविषयस्येति, तदासिद्धिः; यदि रजतमिति ज्ञानस्येति, तदा परस्यैव संविद्विरोधः, यदिदं रजतमित्यमन्वयं सा शुक्तिरेवेति प्रतीतेः; यदाकारं यद्विज्ञानं तत्तद्विषय इति प्रमितिनिष्ठेयं व्यवस्था; एवं च भ्रमस्य रजताविषयकत्वान्न भ्रमे तदिन्द्रियसंनिकर्षापेक्षा; शुक्तिसंनिकृष्टेनैव इन्द्रियेण दोषसहकृतेन भ्रमोत्पादाभ्युपगमादिति । तन्मन्दम्; भ्रमे रजत-

त्याविषयत्वे अख्यातिवादापत्तेः; तदविषयकत्वेऽपि तदाकारतास्वीकारादृदोष इति चेत्, आकारतैव विषयतेति, कथं भ्रमस्य रजताद्यविषयकत्वम् । ननु नाकारत्वं विषयता, किं तु यत्संनिकृष्टेन करणेन यज्ज्ञानं जन्यते, स तस्य विषय इत्युक्तेः स्वजनकेन्द्रियसंयोगादिरेवेति, तस्य रजते बाधात् न तस्य भ्रमविषयत्वमिति चेत्, न; अख्यातिवादापत्तिवारणायाकारताया अवश्याभ्युपेयत्वे पर्यादावपि सैवास्तु विषयता, न तूक्तसंप्रयोगादिः; तथात्वे गौरवात् रजतत्वेनेमं साक्षात्करोमीत्यनुभवस्य भ्रमप्रमासाधारणस्य वैरूप्यकल्पनापत्तेश्च; निलज्ञाने विषयतान्तरकल्पनावश्यकत्वाच, तस्या एव स्वसमानाकारजन्यज्ञानेष्वपि स्वीकर्तुमुचितत्वाच; धर्मिभेदेन धर्माणां भेदावश्यकत्वेऽपि दण्डादिवद्विशेषणतायाः संभवाच । किं च घटवद्भूतलम्, घटो रूपवान्, भूतले पटः इति समूहालम्बनात्मकज्ञानस्य घटे भूतलविशेषणकत्वापत्तिः; रूपांशे घटस्य विशेष्यत्वानुरोधेन तज्ज्ञानजनकघटेन्द्रियसंनिकर्षस्य विशेष्यतारूपताया आवश्यकतया भूतलस्य पटांशे विशेषणत्वानुरोधेन भूतलेन्द्रियसंनिकर्षस्य प्रकारतारूपतायाश्चावश्यकत्वात् । न च प्रकारतात्वविशेष्यतात्वादीनां विषयतास्वरूपावच्छेद्यतया भूतल-

निष्ठविषयताया विशेष्यतात्वेनैव [illegible]
न तु प्रकारतात्वेनेति वाच्यम् । भूतलं घटवत्, [illegible]
घटः, इति समूहालम्बनप्रतीत्यनुरोधेन [illegible]
त्वात्, न च तत्र संनिकर्षभेदादुपपत्तिः । तत्र [illegible]
संनिकर्षेणोक्तविषज्ञानद्वयजननस्थले गत्यभावात्; संयोगा-
न्यसंनिकर्षे नितरामनुपपत्तिः । किं च प्रकारतानिरूपकता-
देरतिरिक्तत्वे विषयतैवातिरिक्ता अस्तु अनतिरिक्तत्वे चोक्त-
दोषो दुष्परिहार इत्यन्यत्र विस्तरः । एवं चातिरिक्तविष-
यताकल्पनस्यावश्यकत्वे ज्ञानजनकसंनिकर्षस्य विषयतात्व-
कल्पनमनुचितम् । एवं च भ्रमस्यारोप्यविषयकत्वध्रौव्यात्
अपरोक्षविषयस्यारोप्येन्द्रियसंनिकर्षजन्यत्वमावश्यकमिति न
तस्यात्यन्तासत्त्वम् ॥

यत्तु अत्यन्तासतो नरविषाणादेरप्यसत्त्वदशप्रतीतिसंभवेन
नासत्प्रतीयत इति व्याप्त्यभावात्, शुक्तिरजतादेरत्यन्तास-
त्त्वेनैवोपपत्तेः, तथा अन्यथाविदितस्य सम्यग्विज्ञानगोचर
स्वरूपबाध्यत्वस्य सतश्चिदात्मनोऽपि संभवेन सत्र बाध्य
इति व्याप्त्यभावादस्मदादे सत्त्वेनैवोपपत्तेः न ख्यातिबाधा-
न्यथानुपपत्त्या अनिर्वचनीयत्वसिद्धिरिति; तन्न, नरविषा-
णादिशब्दादत्यन्तासतः प्रतीत्यसिद्धेः; नरशब्दस्य नरसं

धन्यर्थकतया विषाणशब्दस्य च शृङ्गमात्रवाचितया तयो-
श्चात्यन्तासत्त्वविरहेण तदन्यस्य चाशब्दार्थतया तत्र प्रती-
त्ययोगात् । न चैकार्थीभावलक्षणसामर्थ्यमेव समासप्रयोज-
कम्, तच्च विशिष्टैकार्थप्रतिपादकत्वं विनानुपपन्नमिति नर-
सम्बन्धित्वविशिष्टशृङ्गरूपार्थान्तरस्य तस्मात्प्रतीतिरावश्यकीति
वाच्यम्, तथा सति तादृशवाक्यजन्यबोधस्य निर्विकल्पक-
तया नरसम्बन्धित्वशृङ्गत्वाद्यप्रकारकतया संशयाद्यविरोधि-
त्वापत्तेः । न हि विशेषदर्शनशून्यस्य तादृशवाक्यजन्यशा
ब्दबोधानन्तरं शृङ्गं नरीयं न वेति संशयो जायते । ननु
संशयजनकशक्तेः कुण्ठितत्वापादनमेव प्रतिबन्धकता, सा
चोक्तवाक्यजन्यबोधस्याप्यनुभवबलादङ्गीक्रियते, अतो न
दोष इति चेत्, न, तादृशप्रत्ययानन्तरं संशयित्वेन शृङ्गं
जानामीति अनुभवापलापप्रसङ्गात्, अर्थान्तरशक्तसमुदाया-
त्तदर्थासंसृष्टार्थान्तरबोधस्यायुक्तत्वाच्च । न ह्येतद्वाक्यश्रवणा-
त्पूर्वमुक्तविशिष्टज्ञानमस्ति, येन तत्र तद्वाक्यशक्तिर्गृह्येत ।
इतरान्वितशक्तिवादेऽप्यन्वयविशिष्टस्यैव पदशक्यता, मन्मते
विशिष्टस्यातिरिक्तत्वेऽपि विशेषणप्रकारेण तस्य भानमिति न
काचिदनुपपत्तिः । न च दण्डविशिष्टे दण्डाभाववद्विशिष्टप्र-
त्ययो नियमेन भ्रमः स्यादिति वाच्यम्, दण्डविशिष्टो दण्ड-

शून्य इत्यभ्युपगमस्य प्रचेतसामनुचितत्वात् । न चैवं दण्डी दण्डवानिति प्रतीत्यापत्तिरिति वाच्यम्; दण्डविशिष्टे दण्डवतो भेदाभावेन विशिष्टप्रतीतेरसंभवात् । अन्यथा घटो घट इत्यादिप्रत्ययापत्तेर्दुर्वारत्वात्; प्रकारान्तरेण तद्वारणेऽपि नास्माकं क्षतिः, अविरुद्धत्वात्, अनिर्वाच्यतावादेऽप्येकार्थीभावस्य सूपपादत्वात्, परस्परनिरूप्यनिरूपकभावापन्नस्वघटकपदार्थविषयताशालिबोधपरतारूपसामर्थ्यस्यैव समासशास्त्रे आश्रयणसंभवात्, परोक्षे अन्यथाप्यस्याभ्युपगमेऽपि बाधकाभावात् । व्याप्यत्वं नोक्तरूपमापाद्यव्यतिरेकः; किं तु स्वाधिकरणनिष्ठाभावप्रतियोगित्वं ज्ञानत्वेन ज्ञानजन्यनाशप्रतियोगित्वं वा, आपादकं सत्त्वमपि स्वप्रकारकधीविशेष्यताव्यापकाभावप्रतियोगित्वाभाव इति नात्मन उक्तव्याप्यत्वम्, सत्त्वव्याहतिप्रसङ्गात् । किं च शृङ्गार्थिना शृङ्ग क्वास्तीति प्रश्ने कृते, यत्र प्रतारकेण अत्र गिरिदर्यां शशशृङ्गमस्तीत्युक्तम्, तत्र शृङ्गत्वावगाहिखण्डशस्तत्पदवत्ताहिप्रत्ययस्यैव जनने तद्वाक्यजन्यबोधानन्तरं शृङ्गार्थिनो गिरिदरीगमनं प्रति प्रवृत्तिर्न स्यात्; तत्र शृङ्गत्वादिमाने चान्यथाख्यातिदुर्वारैवेति किमनेन दुष्टकुचोद्यनिरसनायासेन ॥

यत्तु सतः प्रतीत्यभावेऽसद्वैलक्षण्यज्ञानानुपपत्तिरिति, त-

दसत्, न ह्यसद्वैलक्षण्यमसत्प्रतियोगिको भेद , किं तु सत्ता-
दात्म्यमात्रमित्युक्तत्वात् । ननु तर्हि तत्साधन व्यर्थमिति
चेत्, न, शून्यवादिना परमार्थसतोऽनङ्गीकारात्तत्तादात्म्य
शून्यत्वाविरोधिनोऽनिर्वाच्यत्वस्य साधने तच्छून्यत्वमादाय
जगतोऽर्थान्तरता तेन तदन्येन बौद्धाद्यैरेति तन्निरासाय
तदावश्यकत्वात् । न चासत्ख्यात्यनभ्युपगमे तत्खण्डनादौ
प्रवृत्त्ययोग , असत्प्रतीयत इति परोक्तप्रतिज्ञाया अप्रामा
ण्यसमर्थनरूपे खण्डने विजयार्थं प्रवृत्तिसम्भवात् । सदि-
त्यादिप्रतीयमानविशेष्यकसत्तादात्म्याभावप्रकारकबोधपरवा
क्यात्तु जायत एव प्रतीति । परं तु सा व्यधिकरण
प्रकारकत्वाद्विपर्यय एव । उक्तप्रतिज्ञाया अप्रामाण्यसमर्थन
च प्रतीयमानत्वावच्छेदेन सत्तादात्म्यसाधनमात्रेणाप्युपप-
द्यते । शशशृङ्गमलीकमित्यादौ च शशशृङ्गपद तद्वाक्यप
रम्, अलीकपद चाप्रमाणवाक्यार्थकम्, अन्यथा सत्यभेद-
विशिष्टार्थकत्वे भेदस्य भावाभावविलक्षणस्याभ्युपगमापत्ते ,
तथा च 'भावाभावस्वरूपत्वात्तान्योन्याभावत पृथक्' इति
विरुद्ध्येत । लक्षणया तस्य सद्वृत्तिधर्मविशिष्टपरत्वे मुख्या
र्थपरतादृशवाक्यात्प्रतीत्यनुपपत्ति । वस्तुत सत्यवचा इत्या
दौ प्रमाणेऽपि सत्यशब्दप्रयोगात् तत्समानार्थकऋतशब्दो

ऽपि सदर्थक ; तेन न 'अलीकं त्वप्रियेऽनृते' इति कोश विरोध । निराश्रयस्यैव धर्मस्य स्वीकारे घटत्वादरपि घटा तिरिक्ताश्रय स्यात्, तत्रापि तस्य घटातिरिक्ताश्रयो न सन्नि त्यनुभवात् । अत्रापि हि ऋतभेदस्याश्रयो न सन्निरयेव व्य वहर्तव्यम् ॥

किं चाविषयस्य ख्यातिरस्ति, न वा, नाद्य, ख्यातिवि षये विषयभेदस्य वक्तुमशक्यत्वात् । न द्वितीय, तस्या ख्यातौ तत्ख्यातिखण्डनायोगात् । न च शशशृङ्गमसदिति मुख्यार्थपरवाक्यप्रामाण्य न स्यादिति वाच्यम्, इष्टत्वात् । न च तदतिरिक्तयावदर्थपदसमुदायार्थोऽर्थ प्रतीयते तादृश समुदायनकल्पितत्वादृशसमुदाययोरन्यतरप्रामाण्ये तदितर- प्रामाण्यमिति नियमभङ्गापत्तिरिति वाच्यम्, अविषयो न सन्निति वाक्ये तदाप्यमते, विषयभेदयाश्रयदोर्लभ्येन तत्सत्त्वे तदसत्त्वे च तादृशवाक्यप्रामाण्यस्य दूरनिरस्त- त्वात्, उक्तनियमस्याप्रयाजकत्वाच । किं च शशशृङ्गादि शब्दादखण्डार्थप्रत्यये नीलघटादिशब्दादपि तदापत्ति, इष्टा- पत्तौ नीलत्वन घट जानामीत्युल्लेखानुपपत्ति, तादृशविशि ष्टस्य घटत्वानाश्रयतया घटपदेन तदुल्लेखायोगादित्यन्यत्र वि- स्तर । एव च परमार्थविलक्षण रजतादि सत्तादात्म्यवत्,

अपरोक्षप्रतीतिगोचरत्वात्— इत्यनुमानेन स्वप्रकारकधीविशेष्यताव्यापकाभावप्रतियोगित्वरूपपरमार्थविलक्षणत्ववदिष्टसत्तादात्म्यं शुक्तिरूप्यादौ सिध्यति तदेव चानिर्वाच्यत्वम्, सत्तादात्म्यशून्यतया एव असन्तासत्त्वरूपत्वात्। एवं च दृश्यत्वादिभिर्वियदादेरनिर्वाच्यत्वं शुक्तिरूप्यदृष्टान्तेन यैरनुमितं तैरुक्तप्रयोगे सिद्धसाधनं सुशक्योद्भावनमेव। तथा च पक्षे साध्यतावच्छेदकावच्छिन्नवत्त्वमात्रस्य पराभ्युपगतत्वमात्रमेव सिद्धसाधनोद्भावनबीजं न तु तत्त्वावेदकप्रमाणवेद्यत्वं तस्येति सुधीभिर्विभावनीयम् ॥

तदेवमनिर्वचनीयत्वप्रसिद्धौ भेदेऽनिर्वचनीयत्वादिविकल्पस्य तन्मूलकप्रमादेश्च उपपन्नतरत्वात् साध्यविकल्पेन दूषणमपि संभवतीति बोध्यम्। मिथ्याशब्दस्य सद्विलक्षणत्वमेवार्थः, तच्चात्यन्तासदनिर्वाच्यसाधारणम्, न च सामान्यस्य सदसदुभयवृत्तित्वायोगः; यद्वृत्त्यभावप्रतियोगितायाः सदसत्साधारण्यस्य सर्वैरेव वाच्यत्वात्। प्रतियोगिता प्रतियोगिभेदेन भिद्यते; नात एकस्योभयसाधारण्यमिति चेत्, पूर्वोक्ताभावप्रतियोगितारूपमिथ्यात्वस्याप्यनुभयसाधारण्यमक्षतमेव। किं बहुना, घटत्वादिसामान्यमपि व्यावहारिकप्रातिभासिकसाधारणमेव। यत्तु व्यावहारिकप्रातिभा-

सिक्तसाधारण धूमत्वादिसामान्यं नाभ्युपगन्तु युक्तं तथा सति वह्नौ साध्ये धूमादेर्व्यभिचारित्वापत्तेरिति, तन्न, वह्न्युपध्वंतादिव्यवहारकालानाध्यत्वादेरपि हेतुविशेषणत्वाभ्युपगमात् । तार्किकादिभिस्तदननुसरण चानिर्वचनीयानभ्युपगमादेव । अपरीक्षकैस्तदननुसरण तु यथार्थ वाप्यारोपितधूमादेरत्यन्तासत्त्वनिश्चयान्यथा वेति न परीक्षकैस्तथा वर्तितव्यमिति दिक् ॥

किं चागमोऽप्यनिर्वचनीये प्रमाणम्, तथाहि— 'नासदासीन्नोसदासीत्तदानीम् । नासीद्रजो नो व्योमापरो यत् । किमावरीव कुहकस्य शर्मन् । अम्भः किमासीद्गहन गभीरम् । न मृत्युरमृत तर्हि न । रात्र्या अह्न आसीत् प्रकेत । आनीदवात स्वधया तदेकम् । तस्माद्धान्यन्न पर किं च नास । तम आसीत्तमसा गूढमग्रे प्रकेतम् । सलिल सर्वमा इदम् । तुच्छेनाभ्वपिहित यदासीत् । तमसस्तन्महिना जायतैकम् । कामस्तदग्रे समवर्तताधि । मनसो रेत प्रथम यदासीत्' इत्यादिश्रुत्या सदसतोर्निषेधपूर्वक तमस सत्त्वकथनेन तस्य सदसद्विलक्षणत्वरूपानिर्वाच्यत्वलाभात् । नन्विदमयुक्तम्, एव सति तदा परमार्थतयाङ्गीकृतस्य ब्रह्मणोऽप्यनिर्वाच्यत्वापत्ते, तस्यापि 'आनीदवातम्' इति

वाक्येन प्रलये परिशिष्टत्वावगमात् इति चेत्, न, 'सदेव सोम्येदमग्र आसीत्' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुत्यन्तरेण ब्रह्मणः पारमार्थिकत्वावगतौ तद्विरोधेनार्थापत्तेर्ब्रह्मांशे प्रवृत्त्ययोगात्। न चैवम् 'नोसदासीत्' इत्यभिधानविरोधः, ब्रह्मणस्तदानीं सत्त्वादिति वाच्यम्; 'आनीदवातम्' इत्यादिश्रुत्येकवाक्यतया ब्रह्मान्यस्यैव निषिद्धत्वात्। न च सिद्धसिद्धिभ्यां व्याघातः; ब्रह्मान्यत्वेनेत्यंशपूरणेन 'नोसदासीत्' इत्यंशव्याख्यानसंभवात्। न चैवमपि 'नासदासीत्' इत्यंशविरोधः, सत्त्वप्रतियोगित्वरूपमिथ्यात्वस्य तमःसधारण्यादिति वाच्यम्, अत्रत्यासत्पदस्य सत्तादात्म्यशून्यपरत्वात्। न च 'मूर्तं सदिति संप्रोक्तममूर्तमसदुच्यते। मूर्तामूर्तवरद्ब्रह्म न सत्तन्नासदुच्यते' इति पैङ्गश्रुतौ सदसत्पदयोः मूर्तामूर्तवाचकतया उक्तत्वात् 'यदन्यद्वायोश्चान्तरिक्षाच्च तत्सद्वायुरन्तरिक्षं चासत्' इति माध्यंदिनश्रुत्या असत्पदस्य वाय्वन्तरिक्षमात्रवाचकतया उक्तत्वेन ब्रह्मान्यत्वेनेत्यध्याहारस्य असत्पदस्य सत्तादात्म्यशून्ये लक्षणायाश्च कल्पनमपेक्ष्य मन्त्रभागद्वयस्य मूर्तामूर्तनिषेधपरत्वमेव युक्तमाश्रयितुमिति वाच्यम्; सदसच्छब्दयोः पारमार्थिकापारमार्थिकपरतया लौकिकवैदिकप्रयोगप्राचुर्येण श्रुतिमात्रप्रसि-

द्वमूर्तामूर्तपरत्वकल्पनस्यायुक्तत्वात्, अध्याहारतो लक्षणाया: अजहल्लक्षणातो जहल्लक्षणायाश्च जघन्यत्वाच्च, उक्तश्रुतेः यथा कयाचिद्वृत्त्या तद्बोधकत्वमात्रेणोपपन्नतया तयोस्तद्वाचकत्वपरत्वकल्पने मानाभावाच्च। न चोक्तासन्निषेधे अप्रसक्तप्रतिषेधापत्तिः, सतो निषेधेन तस्यापातत: प्राप्तिसंभवात्। न चैवं तुल्ययुक्त्या तमोन्यत्वेन सद्भावो 'नोसदासीत्' इत्यस्यार्थः स्यादिति तमसो न अनिर्वाच्यता स्यादिति वाच्यम्, तथा अध्याहारे मानाभावात्, तमःपरमार्थतामाहकप्रमाणाभावात्। अधिकमग्रे वक्ष्यामः। यत्तूक्तव्याख्याने 'तदानीम्' इत्यस्य वैयर्थ्यम्, रज आदेरपि सन्निषेधेनैव निषेधलाभात् पृथग्ग्रहणानौचित्यं च, तस्य पारमार्थिकत्वासंप्रतिपत्तावसन्निषेधेनैव निषेधलाभ इति; तदसत्, 'तदानीम्' इत्यनुक्तौ कालान्तरे सदसन्निषेधसहितस्य कालान्तरे तमःसत्त्वस्य अनिर्वाच्यत्वासाधकतया तन्निषेधाधिकरणकाले तत्सत्त्वाभिधानस्यावश्यकत्वात्। सत्त्वं च परमार्थत्वं असत्त्वं सत्तादात्म्यशून्यत्वमिति तुच्छपरमार्थयोरेव प्रकृतनिषेधविषयत्वेन रजआदिनिषेधस्यावश्यकत्वाच्च। 'तदानीम्' इत्यस्य रजःप्रभृतिनिषेधे एवान्वय इत्यपि वदन्ति। अत्रासदसत्पदयोर्भावाभावपरतास्मदभिमतेति परोक्तिस्तु न श्र-

ज्ञेया, अनादेर्जीवेशभेदादेः प्रलयकालसत्त्वाभ्युपगमेन त-स्यास्मदनभ्युपगतत्वात् । यत्तु रजःपदं रजःप्रभृतिगुणत्रयपरमिति तदसत्, तमसो गुणत्रयात्मकत्वेन तत्सत्त्वे गुण-निषेधासंभवात् ॥

गुरुचरणास्तु— 'नासदासीत्' इत्यस्य असदन्यदासी-दिति 'नोसदासीत्' इत्यस्य च सदन्यदासीदित्यर्थः; न च नञाद्यर्थस्य नोद्देश्यत्वम्, तथा सति न पृथिवी निर्गन्धेत्य-त्रोऽपि पृथिवीभिन्नं निर्गन्धमित्यादिप्रत्ययप्रसङ्गात् इति वा-च्यम्, असत्त भवतीति नासदिति व्युत्पत्त्या इहाब्राह्मण आसीदितिवदुद्देश्यत्वाविरोधात् । न-शब्देनायं समासः । उक्तप्रसिद्धव्यतिक्रममपेक्ष्य वैरूप्यानुसरणस्यापि युक्तत्वाच्च । न चैवं प्रलये सदसत्सत्त्वमात्रेणोक्तनिषेधद्वयोपपत्तेरनिर्वा-च्यत्वासिद्धिरिति वाच्यम्, सद्विलक्षणस्य कालसंबन्धाभि-धानेनैव तत्सिद्धेः । न चैवमसदन्यस्य सत्त्वाभिधानमसं-गतं निरर्थकत्वादिति वाच्यम्, सदन्यस्य कथं कालसंबन्ध इति शङ्कानिरासार्थत्वेन तदभिधानसार्थक्यात्— इत्याहुः ॥

यत्तु 'अद्भुतत्वादनिर्वाच्यं ब्रह्म चित्सदमेव च । अ-चिन्त्यं यत एवैतदतर्क्यांश्लेषमेव च । ऋ-गताविति धातोस्तु पूर्वावगतवत्सदा । स्थितेर्ब्रह्मर्तमित्युक्तमनृतं परिणामतः ।

प्रकृति प्राकृत प्रोक्तमसदशुभत्वत । असता वुद्धिगम्यत्वा-
दसत्यमिति चोन्यते । नियमेन वहिश्चित्तास्ते सन्तो प्रमाणि
स्थिता । विश्व सत्यं व े विष्णोर्नित्यमेव प्रवाहत । न क्वा-
प्यसीदृश विश्व तत्तत्कालानुसारत । असत्यमप्रतिष्ठ ये ज-
गदाहुरनैश्वरम् । त आसुरा स्वय नष्टा जगत क्षयका
रिण ' इति व्यासस्मृतिवलात् पुराणादौ क्वचिज्जगति
प्रयुक्तानामसदनृतानिर्वान्यादिशब्दानाम॰यार्थतया न तादृ-
शस्मृतिवलादपि जगतोऽनिर्वाच्यत्वम्, जगदसत्यतावादिना॰
मासुरत्वोक्तेश्चति, तदयुक्तम्, ' न सती नासती माया माया
नैवोभयात्मिका । अनिर्वाच्या ' इति वृहन्नारदीये प्रयुक्तस्या
निर्वाच्यशब्दस्य अकृतत्वादनिर्वाच्यतापरत्वे ' न सती ' इत्या॰
दिपूर्वार्धेन तस्या सत्त्वादिनिषधावगते । तथा च माया
शब्दितजगत्प्रकृतेरनिर्वाच्यत्वावगतौ कथ जगतस्तद्वारणी
यम् । एव ऋ॰गताविसनुशिष्टादृधातोर्निष्ठाया निष्पन्नस्य
ऋतशब्दस्य पूर्वावस्थितज्ञानविषयार्थकत्वेऽपि कथ परिणा
मितामात्रेण प्रकृतेस्तत्त्वाभाव, तस्या अनाद्यन्तत्वाभ्युपग
मात्, सादित्वेऽपि पूर्वपूर्वतनज्ञानविषयत्वे किं वाधकम् ?
यदि च भावे निष्ठाप्रत्ययस्तथापि ज्ञानरूपत्वाभावमात्रेण प्र
कृत्यादेरनृतपदवाच्यत्वोपपत्तौ पूर्वागतत्वाभिधान तज्ज्ञाभा

य निष्ठाप्रत्ययस्य भूतत्वार्थकत्वानुसरणं चायुक्तम् । न च मनोवृत्तिरूपज्ञानव्यावृत्तये तदिति वाच्यम्, भूतत्वाभिधानमात्रेण तदव्यावृत्तेः, अनादित्वस्य च निष्ठाप्रत्ययावाच्यत्वात्, ब्रह्मरूपज्ञाने सकभूतत्वाभावाच्च । यत्तु विशेषानुक्त्या अनादिसोऽवगतमित्युक्तं भवतीति, तदसत्, शब्दप्रयोगस्यैवावधित्वेन भानस्य व्युत्पत्तिसिद्धतया विशेषानुक्त्यसिद्धेः, यदा हि क्तः प्रयुज्यते तदधिकरणकालवृत्तित्व सम्प्रतियोग्युत्पत्तिकत्वस्यैव तदर्थत्वात् । तथापि 'तदेवर्तम्' इत्यादिस्थले जीवज्ञानव्यवच्छेदानुपपत्तेश्च । तथा च यथाकथञ्चिद्विवक्षितार्थलाभो न मुख्यया वृत्त्येति स्थिते अविद्यादौ प्रयुक्तानामनृतादिपदानां रूढित्यागे हेत्वभावान्नैतदुक्तम् । ब्रह्मणि प्रयुक्तस्य ऋतशब्दस्य तु कश्चिद्रूढित्यागो न दोषाय, अन्यथा 'ऋतᳲ सत्यं परं ब्रह्म' 'तदेवर्तं तदु सत्यमाहुः' इत्यादौ सत्यादिपदेन पौनरुक्त्यापातात् । वस्तुतस्तत्रापि 'यो होता सोऽध्वर्युः' इत्यादाविव प्रथमपदानुरोधेन द्वितीयस्यै वार्थान्तरकल्पना युक्ता । एतेन परिणामादनृतत्वं प्रकृत्यादीनामित्यपि निरस्तम् ॥

एवम् 'यदन्योऽस्ति परं कोऽपि मत्तः पार्थिवनन्दन । सदैवोऽहमयं चान्यो वक्तुमेवमपीष्यते । यदा समस्तदेहेषु

पुमानेको व्यवस्थित । तदा हि को भवान् सोऽहमित्येतद्वि फल वच । त्व राजा शिबिका चेय वय वाह्पुर सरा । अय च भवतो लोको न सदेवन्नृपोच्यते ' इत्यत्र सच्छब्दस्य अपरिणामिपरत्वे देहशिबिकादीना परिणामित्वेऽपि ततो विलक्षणत्वेन सर्वानुभवसिद्धतया त्वदभिमतस्य जीवस्यैवाहशब्दवाच्यस्यैव सत्त्वेन अयमस्मीति वक्तु शक्यतया तादृशवचनवैफल्योक्तेरसगतत्वापत्ते । मन्मते देहादेरसत्त्वादहमस्मीति वक्तुमशक्यत्वादहकारास्पदस्यापि तादृशत्वान्निरुपाधिकात्मसत्त्वस्य चानहकारत्वादस्तु तथापि अस्तीति सद्‌दशमात्रस्यासदिग्धत्वात्सोऽहमस्मीति निर्देशायोग्यत्व स्पष्टमेव । कर्तृत्वाद्युपलक्षित शुद्धचैतन्य तु सर्वानुगतमितरव्यावृत्तत्वमर्थविषयक प्रश्नप्रतिवचनविषयो न भवति । त्वपदेनापि शुद्धचैतन्यविवक्षायाम् ' यदन्योऽस्ति ' इत्यादिकमपि त्वया कथमुपपादनीयम्, ' मत्त ' इत्यत्रास्मच्छब्दस्य जीवपरिग्रहे तस्मादन्यस्य परमात्मन सत्त्वेन तन्निषेधायोगात् । शास्त्रदृष्ट्या अन्तर्यामिपरिग्रहे स्वान्तर्याम्यपेक्षया उत्कृष्टस्यान्यस्याभावेऽपि स्वस्य अयमहमित्युपदेशे किं बाधकम् । एतेन सच्छब्दस्य शुभवाचितामुपेत्य प्रकृत्यादीनाम् असत्पदप्रतिपाद्यत्वोपपादनमपि निरस्तम्, तस्यासन्दाभगतत्वात्, ' वृक्षाद्रवस्तवश्चेय

शिबिका त्वदधिष्ठिता । क वृक्षसंज्ञा याता स्याद्दारुसंज्ञाथवा
नृप' इत्युपक्रम्य, 'एवं छत्रशलाकानां पृथग्भावो विमृश्य-
ताम् । क यातं छत्रमित्येष न्यायस्त्वयि तथा मयि' इत्या-
दिना कारणव्यतिरेकेण कार्यसत्तां निराकुर्वता, असत्त्वहे-
तूपपादकोत्तरसंदर्भेण विरोधात् । 'यदग्ने रोहितरूपं तेजसस्त-
द्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य अपागादग्नेरग्नित्वं
त्रीणि रूपाणीत्येव सत्यम्' इति श्रुत्युक्तरीत्यैव चात्र भग-
वता पराशरेणोपबृंहितमिति नानुमेयश्रुतिमूलकत्वमेतस्य ।
परिणामादिविक्रियाशून्यस्य परमार्थतोपपादनं च परि-
णामित्वादिना परिच्छिन्नत्वप्राप्त्या देहादेरसत्त्वोपपादनाय;
न त्वपरिणामित्वं सत्पदार्थ इति बोधनाय, प्रसिद्ध्यतिक्रमे
हेत्वभावात्, असति हेतावनेकार्थताया अन्याय्यत्वाच्च । एवम-
सद्बुद्धिगम्यत्वाज्जगतोऽसत्यत्ववचनमित्यप्ययुक्तं लक्षणाप्रा-
प्तेः, उक्तरीत्या संदर्भविरोधाच्चेति । एवम् 'भ्रान्तिज्ञानेन
पश्यन्ति जगद्रूपमयोगिनः । ज्ञानस्वरूपमखिलं जगदेतद-
बुद्धयः । अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे । ये तु
ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् । ज्ञानात्मकं प्रपश्यन्ति
त्वद्रूपं परमेश्वर' इत्यादिस्मृतयोऽप्यनिर्वाच्यतां जगतोऽनु-
गृह्णन्तीत्यन्यत्र विस्तरः । एवमुपपत्तिराहित्यान्न्यायानुगृही-

तच्छ्रुतितन्मूलकस्मृतिसहस्रकोटिविरुद्धत्वात् धातोरिति धातुव्याख्यानपदनिर्देशात् अनृतं परिणामतः प्रकृतिः प्राकृतं प्रोक्तमित्येकस्मिन् पदार्थे विवक्षितार्थनिबन्धनाशक्तेः पूर्वावगतवत्सदेत्यत्र सदा स्थितिरुक्ता भवतीति विवक्षितार्थमनुक्त्वा अवगतवदित्यनुपयुक्तवतिनिर्देशात् परमानन्दस्वरूपत्वेन ब्रह्मणः सत्पदार्थतानिर्वाहकशुभत्वानुक्त्या प्रक्रमभङ्गान्यूनतापत्तेश्च; एवमसतां बुद्धिगम्यत्वादित्यादावप्युक्तदोषात् पुनरप्यसत्पदस्याभिधानेन पौनरुक्त्याच्च एतानि वचनानि श्रीमत्कृष्णद्वैपायनप्रणयनच्छायारहितानि मध्वकुकविकल्पितान्येवेत्युक्तार्थे न्यायतया आगमतया वा न निर्णायकानि॥

यानि तु 'असत्यमप्रतिष्ठं ये जगदाहुरनीश्वरम्' इत्यादीनि तानि नाद्वैतदर्शनविरोधीनि, असत्यमित्यस्य न सत्यं यस्मिन्निति व्युत्पत्त्या शून्यवादस्य अप्रतिष्ठमिति स्थैर्यनिषेधेन क्षणभङ्गवादस्य अनीश्वरमिति ईश्वरनास्तिकवादस्य अपरस्परसंभूतमिति स्वभाववादस्य किमन्यत्—अन्यत्किं वाच्यं काम्यस्त इति कामः इष्टस्तद्धेतुकं यस्य यदिष्टं परमाण्वादि तद्धेतुकम्—इत्यनेन स्वबुद्ध्युन्नीतकारणकमित्यवैदिकानामन्येषां च निन्दितत्वेऽपि ब्रह्मवादस्यानिन्दितत्वात्। न चासत्यमित्यस्य सत्यभिन्नमित्यर्थमाश्रित्य अद्वैतमतदूषणमपि

तत्र शक्यमुपपादयितुमिति वाच्यम्; एवं सति त्वदुक्तरीत्या जगदसद्बुद्धिगम्यं वदन्तीति त्वन्मतदूषणस्यापि वक्तुं शक्यत्वात्। यदि च न्यायानुगृहीतश्रुतिविरोधान्नैवमित्युच्यते, तर्हि तुल्यं प्रकृतेऽपि; प्रसिद्धव्यतिक्रमे बीजाभाव इदाहृतस्मृत्यन्तरे तथापि तुल्य इत्यन्यत्र विस्तरः। यत्तु काम इति तत्कारणमविद्योपलक्ष्यते इति, तदसत्; मतान्तरानिरासेन न्यूनताप्रसङ्गात्। यच्च सत्यं न चेत्किमसदेव परस्परसंभूतं न चेत् किं नित्यं स्वतो वा जातम्? आद्यस्योत्तरमन्यदिति, सदसद्भ्यामिति शेषः; द्वितीयस्योत्तरं कामहैतुकमित्यप्रव्याख्यानम्, तदसत्, सदसद्भ्यामित्यध्याहारे मानाभावात्; किंचदारचारस्याच; अपरस्परसंभूतत्वस्याविद्याहेतुकत्वेऽपि व्याघाताच। यदप्यप्रतिष्ठमित्यत्र अप्रतिष्ठापदस्य ज्ञानोच्छेद्यमित्यर्थवर्णनं तदुक्ताक्षरार्थमिति स्पष्टमेव॥

नन्वेवमपि दृश्यत्वादिभिर्वियदादेरनिर्वाच्यत्वं न साधयितुं शक्यम्, आत्मन्यनैकान्त्यात्; तस्य दृश्यत्वानभ्युपगमे तद्ज्ञाननिवर्तकान्तराभावेनानिर्मोक्षप्रसङ्गः; एवं जडत्वमपि प्रमातृभिन्नत्वं ब्रह्मण्यनैकान्तिकं प्रमातर्यसिद्धं च; परिच्छिन्नत्वमभावप्रतियोगित्वं तच ब्रह्मण्यप्यस्ति प्रपञ्चस्य सद्विलक्षणत्वाभ्युपगमात्; किं च मिथ्यात्वस्य मिथ्यात्वे ज-

गत सत्यत्वापत्ति, सत्यत्वे अद्वैतहानिरिति चेत्, न, स्वविषयविषयकज्ञानाबाध्यदृग्विषयत्वरूपदृश्यत्वस्य हेतूकरणेन आत्मनि व्यभिचारानवकाशात्। न च स्वविषयविषयकज्ञानाबाध्यदृग्विषयत्वस्य परै परमात्मन्यभ्युपगमात्तै र्व्यभिचार सुशकोद्भावन इति वाच्यम्, निर्विशेषब्रह्मणस्तै सद्विविक्तताभ्युपगमेन स्वरीत्या व्यभिचारोद्भावनायोगात्। अस्मद्रीत्या च हेतोरबाधत्वात् सुतरा तच्छङ्कानवकाश। आनन्दतीर्थीय प्रति सद्विविक्ततामात्रसाधनेनाप्यस्मदिष्टासिद्धे। एव चिद्विषयत्व वा दृश्यत्वम्, तच न ब्रह्मणि अत्यन्ताभेदे सबन्धानभ्युपगमात्। न च नित्यातीन्द्रियत्व सिद्धि, अस्मन्मते अभिमानचित्तादात्म्यरूपस्य चिद्विषयत्वस्य सर्वदृश्यसाधारण्यात्, परमतेऽपीश्वरसाक्षिवेद्यत्वस्य सार्वत्रिकत्वात्। आत्मनि व्यभिचारश्च पूर्ववद्वारणीय। अथवा परमात्मातिरिक्त सर्वमस्वतन्त्रमित्याकारकयत्किंचिद्धी व्यक्ति तद्व्यक्तित्वेन निवेश्य तद्विषयत्व विवक्षणीयम्। यद्वा सत्यादिपदतात्पर्यविषयाविषयकदृग्विषयत्व दृश्यत्वम्। एव जडत्वमप्यर्थोपलक्षितप्रकाशान्यत्वम्, न तु प्रमातृभेद येनोक्तदोष स्यात्। परिच्छिन्नत्वमपि स्वज्ञानाबाध्यभेदप्रतियोगित्वम्। यत्तु मिथ्यात्वस्य मिथ्यात्वे जगत सत्यत्वाप

त्तिरिति, तन्न, मिथ्यामिथ्यात्वकत्वमित्यस्य स्वनिष्ठात्यन्ता-
भावप्रतियोगिमिथ्यात्वकत्व मिथ्यात्वात्यन्ताभावो वा यद्य-
र्थस्तदा मन्मते शुक्तिरूप्यगतमिथ्यात्वमिथ्यात्वानुरोधेन त-
त्रापि सदत्यन्ताभावस्याभ्युपगमात्पारमार्थिकत्वस्यानभ्युपग-
माच्च व्यभिचारात्; अनुकूलतर्काभावे सन्दिग्धानैकान्त्य-
मपि दोष एव । एव पारमार्थिकत्व यदि मिथ्यात्वाभाव-
स्तदा इष्टापत्तिरेव, धर्म्यधिकसत्ताको मिथ्यात्वात्यन्ताभावो
हेतुमति प्रपञ्चेऽसिद्ध, प्रतियोग्यधिकसत्ताकश्च वियदादा
विष्ट । स्वप्रतियोग्यधिकसत्ताको विवक्षितश्चेत्, ब्रह्मनिष्ठस्य
मिथ्यात्वात्यन्ताभावस्य व्यावहारिकत्वे व्यभिचार, पार-
मार्थिकत्वे, ब्रह्मातिरेके तदनतिरेके चेष्टापत्तिरेव, मिथ्या-
त्वाधिकसत्ताकतदभाववत्यपि प्रपञ्चे स्वाधिकसत्ताकत्वस-
मानाधिकरणात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वस्य अव्या-
घातात् । सत्यता हि स्वान्यूनसत्ताकमिथ्यात्ववद्भेद, त-
स्यैवापादने अप्रयोजकता, तद्भेद प्रति तार्किकमते
सदत्यन्ताभावव्याप्यवृत्तितदत्यन्ताभावादेरिव व्याप्यवृत्तित्व-
विशिष्टतदभावत्वावच्छिन्ननिरूपकताकाधिकरणताया अपि
व्याप्यत्वे साधकाभावात्, स्वावृत्तिमिथ्यात्वकत्वादेरुपाधि-
त्वाच्चेत्यादि दिक् । एतेन एकस्मिन् धर्मिणि प्रसक्तयो पर-

स्पराविरहयो परम्पराविरहव्यापकयोर्वा एकमिथ्यात्वे ततोऽन्यदधिकमिति नियमाद्वियदादिगतमिथ्यात्वमिथ्यात्वे तद्गत सत्ताया आधिक्यापत्तिरिति परास्तमिति ॥

यत्तु मोक्षदशाया अपरोक्षज्ञानरूपस्य ब्रह्मणो विषयशून्यत्वे ज्ञानत्वानुपपत्तिरिति, तन्न, अतीतविषयज्ञानादीनामपि तथात्वापत्ते । न चापरोक्षज्ञानं विषयसमकालत्वनियममिति वाच्यम्, ब्रह्मात्मकापरोक्षज्ञानस्यापि ममारदशाया सत्त्वात् । यदा अपरोक्षज्ञानं तदा तद्विषय इत्युक्तौ च विनश्यदवस्थशब्दादिविषयकसाक्षात्कारे व्यभिचारात्, त्वन्मते शब्दत्वादेरप्यनित्यत्वाभ्युपगमात्, मया मुक्तौ कालानभ्युपगमाच, यदा यद्विषयकमपरोक्षं तदा स विषय इति नियमवदुक्तनियमस्यानभ्युपगमेऽपि क्षत्यभावाच ॥

नन्वेवमपि घट सन्निसाद्यध्यक्षबाधितविषया दृश्यत्वाद्य इति चेत्, न, प्रत्यक्षायोग्यमिथ्यात्वविरोधिसत्त्वानिरुक्ते, प्रमाविषयत्वादेरात्माश्रयत्वादिग्रस्तत्वात्, चक्षुराद्ययोग्यत्वाच, कालसम्बन्धस्वरूपसत्तादेर्मिथ्यात्वाविरोधित्वात्तात्विककालसम्बन्धस्यात्माश्रयकवलितत्वात् । एतेन सत्त्वमखण्डोपाधिरित्यपि प्रत्युक्तम्, मिथ्यात्वाविरोधित्वात् । अत एव जाति

विशेष सत्त्वेऽपि न, जात्यादीनामसत्त्वप्रसङ्गात्, एकाकारप्रतीतौ सत्त्व-घवैलक्षण्यकल्पनस्यायुक्तत्वाच्च, प्रकृते क्षत्यभावाच्च। उक्तमिथ्यात्वाभावतद्वद्भेदयो अतीन्द्रियघटितधर्मावच्छिन्नप्रतियोगिताकत्वेन गुरुत्वादभावतदवच्छिन्नभेदवदप्रत्यक्षत्वाच्च ॥

एतेनोपजीव्यत्वात्प्रबलेन प्रत्यक्षेणानुमानस्य बाध इत्यपि निरस्तम्, यदंशे उपजीव्यत्वं तस्यानुपमर्दात्। न च धर्म्यादि पारमार्थिकत्वमनुमानेनोपजीव्यते, किं तु तत्स्वरूपमात्रम्। तदुक्तमाचार्यवाचस्पतिभि — तत्पादकाप्रतिद्वन्द्वित्वादिति। प्रत्यक्षमपि चन्द्रप्रादेशिकत्वमागमेन युक्त्या च बाध्यते। यत्तु चन्द्रप्रादेशिकत्वादिविषयं प्रत्यक्षं दूरत्वादिदोषनिश्चयादपरीक्षितम्, घटं सन्निलादिप्रत्यक्षं च परीक्षितम्, तज्जनकदोषानिश्चयादिति, तन्न, प्रकृते प्रत्यक्षजनकदोषस्याविद्यादिरूपस्य श्रुत्यादिना प्रभावनोत्तरमेव अनुमानप्रवृत्ते। न च जगतोऽज्ञानजन्यत्वे प्रमाणाभाव, 'मायां तु प्रकृतिं विद्यात्' 'जीवेशौ आभासेन करोति माया चाविद्या च स्वयमेव भवति' इत्यादिश्रुतिभिस्तत्सिद्धे ॥

न च जगतो मायिकत्वे मायीश्वरसाक्षात्कारविषयत्वानुपपत्ति, 'न च मायाविना माया दृश्यते' इत्युक्तेरिति

वाच्यम् ; प्रतिबन्धासिद्धेः, 'ततो मायां परां चक्रे देवशत्रुः प्रतापवान । सिंहान व्याघ्रान् वराहांश्च नरक्षूनृक्षवानरान । मुमोच धनुरायम्य प्रद्युम्नस्य रथोपरि । गान्धर्वास्त्रेण चिच्छेद सर्वांस्तान खण्डशस्तदा । प्रद्युम्नेन तु सा माया हता तां वीक्ष्य शम्बरः । अन्या मायां मुमोचाथ दानवः क्रोधमूर्च्छितः । निहता हस्तिमायां तु तां समीक्ष्य महासुरः । सैंहीं मायां महातेजाः सोऽसृजद्दानवेश्वरः । सिंहान्विद्राविताद्दृष्ट्वा माययाष्टापदेन वै । शम्बरश्चिन्तयामास' इति मायिनोऽपि मायाद्रष्टृत्वस्य महाभारतादावुक्तत्वात् । न च साक्षात्कृततत्त्वस्य परमेश्वरस्य जगत्प्रतीतिरनुपपन्नेति वाच्यम्, ईश्वरीयाधिष्ठानसाक्षात्कारस्य स्वप्रकाशशुद्धचैतन्यात्मनो अविद्याविरोधित्वाभावात्, विस्तृतं चैतदन्यत्र । न चैवमीश्वरस्याज्ञत्वापत्तिः, साधकाभावात् धर्मिग्राहकमानविरोधाच्च; 'न च मायाविनो माया दृश्यते विश्वमीश्वरः । सदा पश्यति तेनेदं न मायेत्यवधार्यताम् । अपरोक्षदृशो मिथ्यादर्शनं न कचिद्भवेत् । सर्वापरोक्षविद्विष्णुर्विश्वदृक्तत्र तन्मृषा' इति पद्यद्वयस्य ब्रह्माण्डपुराणान्तर्गतेः प्रामाणिकत्वेऽपि, 'ज्ञानस्वरूपमेवाहुर्जगदेतद्विचक्षणाः । अर्थस्वरूपं भ्राम्यन्तः' इति; 'तस्मान्न विज्ञानमृतेऽस्ति किं-

चित्क्वचित् कदाचिद्द्विज विश्वरूपम्' 'द्वैतिनोऽतथ्यदर्शिन' 'अह हरि सर्वमिद जनार्दन ' 'स वासुदेवो न यतोऽन्यद् स्ति' इत्यादिश्रुत्यनुगृहीतस्मृतिशतविरुद्धत्वेन अनपेक्षत्वात् । 'ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि । एक आत्मा पर ब्रह्म तद्भावो मुक्तिरित्यपि । एवमादिविरुद्धानि वचनान्यथ युक्तय । प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकै । वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना । इतराणि विरुद्धानि प्रलम्भभ्रमजान्यपि' इत्यादि व्यासस्मृतिरिति परोदाहृत पद्यजातमपि न प्रामाणिकम्, प्रसिद्धव्यासस्मृतावनुपलम्भात् अन्यस्मृतिव्याख्यातृभि क्वाप्यनुदाहृतत्वाच्च ॥

'असत्यमप्रतिष्ठ ते जगदाहुरनीश्वरम् । अपरस्परसभूत किमन्यत्कामहैतुकम् । एता दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धय । प्रभवन्त्युग्रकर्माण क्षयाय जगतोऽहिता ' इति भगवद्गीतावचन तु न विरुद्धम्, असत्यमित्यस्य न सत्य यस्मिन्निति व्युत्पत्त्या निरतत्त्वपरत्वात् तस्य च शून्यवाद एव सगते , 'भावा क्षणक्षयिण एव निरात्मकाश्च' इति तदभ्युपगमात्, अत एवानीश्वरत्वमपि सयोक्तम् । न च सद्दृष्टिहेत्वत्पुरुषो बलीयानिति वाच्यम्, प्रसिद्धानुवादे अस्य अविनिगमकत्वात् । अन्यथा अपरस्परसभूतत्वाद्यभिधानासंगते ॥

न च शून्यवादान्मायावादस्याविशेष, सतो जगतो त्पद्यत इति तदभ्युपगमात् । अन्यथा बौद्धैरमतोऽर्थक्रिया कारित्वानभ्युपगमेन असत सदुत्पत्त्यभिधानविरोधात्, स्थिरस्यापि हि कारणत्वे युगपत्सर्वोत्पत्त्यादिप्रसङ्गात् सह कारिविरहस्य कार्यानुत्पत्तिप्रयोजकत्वे क्षणभङ्गवार्तोच्छेदा-पत्ते । अभ्युपगम्यते हि शून्यवादिनापि क्षणभङ्ग । प्रसिद्ध चैतदात्मतत्त्वविवेकादौ । तार्किकशिरोमणिनाप्युदाहृतम्— 'नैरात्म्यदृष्टिं मोक्षस्य हेतु केचन मन्वते । आत्मतत्त्व धिय त्वन्ये न्यायवेदानुसारिण ' इति । आत्मतत्त्वविवेक ऽपि— 'अस्तु तर्हि शून्यतैव परम निर्वाणमिति चेत्, न, सा हि यद्यसिद्धा कथ तद्वगम विश्रम्, परतश्चेत्सिद्धा, परोऽप्यभ्युपगन्तव्य, स च परो यदि सवृतिरव, विश्व शून्यतयोर्न कश्चिद्विशेष इति कथ तदप्यवशिष्यत, अस-वृतिरूपश्चेत्पर परत एव सिद्धावनवस्था स्वयमसिद्धश्चेत्कथ शून्यत्वमपि साधयत् स्वत सिद्धश्चेन्नायातोऽसि मार्गेण । तथाहि— स्वत सिद्धतया तदनुभवरूपम्, शून्यत्वादेव न तस्य कालपरिच्छेद इति नित्यम्, अत एव न देशावच्छेद इति व्यापकम्, अत एव तन्निर्धर्मकमिति विचारास्पृष्टम्, तस्य धर्मधर्मिभावमुपादाय प्रवृत्ते, अत एव च तस्य

विशेषाभाव इति अद्वैतम्, प्रपञ्चस्यापारमार्थिकत्वादेव निष्प्रतियोगिकमिति विधिरूपम्, अविचारितप्रपञ्चाक्षेपात्तु शून्यमिति व्यवहार, तथापि प्रपञ्चशून्यानुभवमात्रस्य प्रपञ्चेन क सम्बन्ध, न च नाय प्रकाशत इति चेद्वस्तुतो न कश्चित्, सवृत्या तु गगनगन्धर्वनगरयोराधाराधेयभाव इव विषयविषयिभाव, स च यथा नैय्यायिके समर्थयिष्यते तथैव, वेदान्तिष्वस्त्वसावस्मिन् दर्शन इति विशेष, अविद्यैव हि तथा तथा विवर्तते यथानुभवीयतया व्यवह्रियते, तत्त-मायोपनीतोपाधिभेदाचानुभूतिरपि भिन्नेव व्यवहारपथमवतरति गगनमिव स्वप्रदृष्टघटकटाहकोटरकुटीकोटिभि । तदास्ता तावत्किमार्द्रकवणिजो वहित्रचिन्तयेति । तस्मादनुभवव्यवस्थितावनात्मापि स्फुरतीत्यवर्जनीयमिति प्रविश वानिर्वचनीयख्यातिकुक्षि तिष्ठ वा मतिकर्दममपहाय न्यायानुसारेण नीलादीना पारमार्थिकत्वे'— इति । यदि स्वप्रकाशात्मवादोऽपि शून्यवाद स्यात् तर्ह्यायातोसि मार्गेणैत्सगत स्यात्, तस्योक्तमार्ग एव सुस्थितत्वात्, अनिर्वचनीयख्यातिकुक्षिप्रवेशे नियोगानुपयोगाच, तत्रैव प्रविष्टत्वात् । अत एव 'नासतो दृष्टत्वात्' इति भगवान् सूत्रकार असत कार्योत्पादकत्व निराचकार । शून्यस्य परमार्थसत्त्वे तु कथमसत

इत्युक्तिः संगच्छेत । 'नाभाव उपलब्धेः' इत्यत्र च बाह्यार्थालीकता निराचकार । 'वैधर्म्याच्च न स्वप्नादिवत्' इत्यत्रापि जगन्मिथ्यात्वम् तर्कपीड्यत्वात्स्वप्नवदित्युक्ते स्वप्नादेर्दृष्टान्तस्यापि निस्तत्त्वतारूपसाध्यविरुद्धधर्मवत्त्वात् स्वप्नादिव दिति दृष्टान्तो न युक्त, तत्राप्यारोप्याधिकसत्ताकमधिष्ठानमन्तरेण निरधिष्ठानकभ्रमानभ्युपगमादिति पर्यवसितार्थः । 'द्वे सत्ये समुपाश्रित्य बुद्धाना धर्मदेशना' इति धर्मकीर्तिवचनं तु एकेनैव बुद्धेन सत्यक्षणिकविज्ञानवाद. अनिर्वाच्यक्षणिकविज्ञानवादश्च परस्परविरुद्धौ कथ प्रदर्शिताविल्याशङ्कय अधिकारिभेदेन तद्देशनोपपत्तिप्रतिपादनपरम्, उक्त हि तेनैव—'देशना लोकनाथाना श्रोतृचित्तवशानुगा' इति । एतेन प्रसिद्धप्रामाणिकमन्थेष्वनुपलभ्यमानं स्वप्रकाशपरमार्थानुभवात्मकत्व शून्यस्य शून्यवादिसमतमिति, तच 'सत्यं तु द्विविधं प्रोक्तम्' इति तद्वचनैरेवावगम्यत इति च परोक्तम श्रद्धेयमेव ॥

ननु प्रत्यक्षबाधाभावेऽपि श्रुत्यैव बाधोऽस्तु । तथा हि— 'विश्व सत्यं मघवाना युवोरिदापश्चन प्रमिणन्ति व्रत वाम् । अच्छेन्द्राब्रह्मणस्पती हविर्नोऽन्न युजेव वाजिना जिगातम्' इति ऋक्संहिताद्वितीयाष्टकवाक्येन देवप्रमितत्वरूप-

तात्पर्यलिङ्गसहकृतेन विश्वसत्यताबोधनादिति चेन्न, तत्र हि 'विश्व सत्यम्' इत्यनेन विश्वपरमार्थत्वाबोधनात् । तथा हि— हे इन्द्राब्रह्मणस्पती मघवाना धनवन्तौ, मघमिति धननाम, विश्व सर्व सत्य सद्भूतयात्कर्मफलस्यावश्यभावित्वाद्वा कर्म युवोरित् युवयोरेव युवामेवोद्दिश्य सर्वाणि कर्माण्यनुष्ठेयानीत्यर्थ ,आपो व्यापनशीलदेवता, च न— इत्येतत्पद द्वयसमुदाय , 'न हि देवो न मर्त्यो महस्तव क्रतु पर ' इत्यादौ न शीति शब्दवत् 'ददाति मह्य यादुरी' इत्यादौ यादुरीत्यादिवच्च ऐकपद्यमध्यापकसम्प्रदायसिद्धम्, वा युवयो व्रत सकल्प वा न प्रमिणन्ति न हिंसन्ति, मीङ् हिंसाया क्रव्यादिक , किं त्वनुमोदन्त इति यावत्, न अस्माक हवि र्दध्यादिकमन्न चरुपुरोडाशादिक चाताभिलक्ष्य वा वाजिना वेगवन्तौ अश्वाविव युजा युक्तौ सन्तौ जिगात वयजनमाग च्छतम् इत्येतदर्थत्वेन स्तुतिपरस्यैतद्वाक्यस्य विश्वसत्यत्वे ता त्पर्याभावात् ॥

'शाक्मना शाको अरुण सुपर्ण आया मह शूर सनादनीळ यश्चिकेत सत्यमित्तन्नमोघ वसु स्पार्हमुत जेतोत दाता' इत्यस्यापीन्द्रस्तुतिपरतया विश्वसत्यत्वे न तात्पर्यम् । तथा हि— शाक्मना शक्मैव शाक्म तेन

शाक्मना बलेन शाक शक्त स्वशक्त्यैव कर्तुं शक्त अरुण अरुणवर्ण. सुपर्णः पक्षीव आगन्छतीत्यध्याहार' उपसर्ग-श्रुते., यो महो महान् शूर विक्रान्त सनात् पुराण अनी-ल अनीड' नीडस्याकर्ता, न हीन्द्रोऽप्रिवस्कुत्रचिदपि यज्ञे नीड करोतीति एव सुपर्ण इत्यादिरूपकेणेन्द्रमाह, स इन्द्र इदमिदानीं कर्तव्यमिति यच्चिकेत जानाति तत्सत्यमित्सफल-मेव न मार्घ न निष्फल स्पार्ह स्पृहणीय वसु धन जेता जयति शत्रुभ्य सकाशात् उत अपि च दाता ददाति च स्तोतृभ्य., जेता दातेति तृन, तेन 'न लोक' इत्यादिना षष्ठीप्रतिषेध , न च 'विश्व मत्यम्' इत्यादौ सत्यशब्दस्याप्रसिद्धार्थता, 'यो वै धर्म सत्य वै तत्तस्माद्धर्म वदन्तमाहु सत्य वदति' इति श्रुतौ धर्मशब्दस्य सत्यशब्दार्थत्वोक्ते । न च वैदिकलौकि-कप्रसिद्धिभ्या सत्यशब्दस्य परमार्थपरत्वैव युक्तेति वाच्यम्, अन्यपरवाक्ये प्रमाणान्तरविरुद्धार्थपरताया अयुक्तत्वात्, उपक्रमादिमध्यतात्पर्यलिङ्गमचिवरयाद्वैतवाक्यस्यैव बलव त्त्वात् । एव पचान्यस्य 'महतो महानि सत्यासत्यस्य करणानिवोचम्' इत्यत्रापि सत्यपद सफलपरमेव, सफलेऽपि 'सत्यसकल्प' इत्यादौ तत्प्रयोगात् । 'सत्यो ह्यस्य महिमा' इत्यादौ 'स्वमहिम्नि प्रतिष्ठित' इत्यादाविव महिमशब्दस्य पर-

मानन्दादिरूपस्वमहिमपरत्वात् परमार्थस्वरूपं सत्यत्वमपि विवक्षितुं शक्यम्; महिमशब्दस्य जगत्सृष्ट्यादिकर्तृत्वपरे तु सत्यपदं सफलपरमेव ॥

'कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः' इत्यत्र यतः कविः क्रान्तम् अतीतं सर्वं दृष्टवान् यतश्च मनीषी मनसा ईष्टे ऊहापोहकुशलः यतश्च पूर्वसृष्टविरुद्धमिच्छतामसुराणां परिभवसमर्थः यतश्च स्वयमन्यनैरपेक्ष्येण पूर्वसृष्टप्रकारेण जगद्भावनसमर्थः ततो हेतोः याथातथ्यतः यादृशात्तादृशभावं प्रतिसंधाय व्यदधादित्यर्थः। परमते तु तथागत इत्यादौ तथाशब्दस्यैव सत्यार्थकतया अमरटीकादौ उक्ततया यथाशब्दस्य तद्धितस्य च वैयर्थ्यं स्यादित्यन्यत्र विस्तरः । 'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे। यदासीत्तत एवाद्यः स्वयंभूः समभूदजः' इत्यादिना हिरण्यगर्भजनकत्वोक्तेः, 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' इत्यत्र निखिलक्षराक्षरविलक्षणत्वोक्तेश्च। नास्मन्मतप्रतिकूलता, भगवतः क्षराक्षरविलक्षणतायां तत उत्तमतायां चाविवादात्; संसारिजीवस्वरूपमपेक्ष्यातिरिक्तस्य, अशनायाद्यतीतस्यापेतमहाभूतादिभेदस्य निरतिशयस्वप्रका-

शपूर्णानन्दलक्षणस्य निखिलकारणस्य परमात्मनो अस्मदिष्टत्वात् ॥

हेयप्रत्यनीकगुणाश्च भगवदभिन्ना एव केचिदविद्यावशाद्भिन्नतयावभासन्त इति न तत्प्रतिपादकागमविरोध । कादाचित्का कर्तृत्वादयश्च मायोपाधिका , तानेतानवलम्ब्य सगुणवादा प्रवर्तन्ते । न च 'स्वाभाविकी ज्ञानबलक्रिया च' इति गुणाना स्वाभाविकत्वाभिधानविरोध , 'स्वाभाविकी' इत्यस्य स्वभावभूता इत्यर्थकत्वेऽपि ज्ञानानन्दादिवदविद्यकभेदवत्त्वेनापि च स्वरूपानतिरेकेण तदविरोधात्। इयांस्तु विशेष — त्वन्मते ब्रह्मणस्तदभिन्नाना सद्गुणाना च विशेषोऽभ्युपगम्यते मया त्वाविद्यको भेद इति । न चैव ब्रह्मण कर्तृत्वादिकमपि स्वभाव इति कुतो नोच्यत इति वाच्यम् , 'तदैक्षत तत्तेजोऽसृजत' इत्यतीतत्वादिश्रुतेरनित्या कर्तृता विनानुपपत्ते । यत्तु भगवदभिन्नानामपि क्रियादीनाम् 'ऐक्षत' इत्यादिना निर्देशो न विरुध्यते, सर्गाद्यकालेऽव्यक्तस्य सकल्पस्येदानीं शक्त्यात्मना अवस्थानाभ्युपगमादिति , तदसत् , शक्तिव्यक्त्योरप्य नित्यत्वाभ्युपगमात् । न च शक्तिव्यक्ती अखण्डधर्मौ, तथा च तद्विशिष्टस्य सकल्पादेर्यत्किंचित्कालसंबन्धित्व कालान्तरसबन्धित्व चाभ्युपेयते, अतो न विरोध इति वाच्यम् , एतन्न्या-

यस्याम्बरादिष्वपि तुल्यत्वापत्त्या तेषामपि नित्यत्वाभ्युपगमापत्तेः, स्वभावस्याव्याप्यवृत्तित्वविरोधाच्च । न हि कपिसंयोगादिकं वृक्षादेः स्वभाव इत्युच्यते । यथाकथंचित्स्वभावत्वोपपादनस्याप्रिप्रमत्कत्वात्; सत्कार्यवादे इतोऽन्यस्य भूतत्वादेरभावाच्च । तस्मात्सार्वदिकत्वेन श्रूयमाणा गुणाः स्वभावानतिरेकिणोऽन्ये त्वौपाधिका इति न कश्चिद्विरोधः । अनन्ता गुणाः शुद्धसत्त्वादयो यस्य एवंभूते गुणतो गुणवशादनन्तविग्रहे इत्यपि व्याचक्षते ॥

नन्वखण्डार्थत्वं वेदान्तानामनुपपन्नम्; तथाहि— तद्धि संसर्गागोचरप्रमितिजनकत्वं संसर्गत्वानिरूपकप्रमितिजनकत्वपर्यवसितम् । तच्च न वाक्यस्य युक्तम्, तस्यैकपदार्थेऽपरपदार्थसंसर्गावगाहित्वात्, अन्यथा पदद्वयवैयर्थ्यापत्तेः इति चेत्, अत्राहुः— प्रतीतिस्तावद्विशिष्टवैशिष्ट्यावगाहिनी तदुपलक्षितवैशिष्ट्यावगाहिनी चेति द्विविधा । तत्र आद्या विशेषणं विशेष्यं तत्संसर्गं चावगाहते, अन्यथा विशेष्यान्वयिनान्वयित्वरूपविशेषणत्वस्यासंभवप्रसङ्गात् । द्वितीया तूपलक्षणीभूतधर्मं नावगाहते । न चैवमिदं द्रव्यमिति ज्ञानस्य द्रव्यत्वोपलक्षितावगाहिनो घटत्वाद्युपलक्षितावगाहित्वस्याप्यनपायात् अयं घटो न वेत्यादिसंशयविरोधित्वापत्तिरिति

वाच्यम्; तटस्थस्यापि द्रव्यत्वादेर्द्रव्यनिष्ठविषयतानिरूपकत्वाङ्गीकारेणातिप्रसङ्गवारणसंभवात् । एवं च भेदसंसर्गकप्रत्ययस्थले विशेष्यविशेषणवैशिष्ट्यभानस्यावश्यकत्वेऽपि सोऽयमित्याद्यत्यन्ताभेदपरवाक्यस्थले धर्मिमात्रस्वरूपस्यैक्यस्य संसर्गतया भानकल्पने मानाभावात् तत्तेदंताभयनिरूपिततदाश्रयनिष्ठविषयताशालित्वमात्रमभ्युपेयते, तावन्मात्रेण च इदंतोपलक्षिते तत्तोपलक्षितभेदज्ञानविरोधित्वमप्रत्यूहम् । तथा चोक्तवाक्यमेवाखण्डार्थं प्रसिद्धम् ॥

एतादृशशाब्दबोधे च विशिष्टपरत्वाभावनिश्चयसहकृततदादिपदजन्यतत्ताविप्रकारकोपस्थितिरुक्तरीत्या तदुपलक्षितोपस्थितिर्वा शाब्दधीप्रयोजकसामान्यकारणजातसमवहिता प्रयोजिकेत्यादिकं शास्त्रारम्भसमर्थने प्रपञ्चितम् । विशिष्टपरत्वाभावनिश्चयश्च कचिदन्वयानुपपत्त्या कचिदन्यथा च । आद्यया यथा— सोऽयमित्यत्र । तत्र हि तदेतद्देशकालविशिष्टयोस्तदिदंभ्यां परामर्शाद्विशिष्टवैशिष्ट्यबोधस्तावन्न संभवति, इतरविशेषणवैशिष्ट्यावच्छेदेन विशेषणान्तरसबन्धाभावात्; विशिष्टातिरेके तु भिन्नकालीनविशेषणावच्छिन्नयोर्यौगपद्यस्यैवाभावेन अभेदस्य दूरोत्सारितत्वात्, तत्तेदंतयोरेकस्य विशेषणत्वमन्यस्योपलक्षणत्वमित्यत्र विनिगम-

काभावाच्च । द्वितीयेन यथा— प्रकृष्टप्रकाशश्चन्द्र इत्यत्र । अत्र हि चन्द्रस्वरूपमात्रस्य पृष्टत्वात्तस्यैव प्रतिवक्तव्यतया विशेषणांशे तात्पर्याभावात् ॥

यत्तु सोऽयमित्यादौ मोक्तानुपपत्तिः, तच्छब्देन तद्देशकालसंबन्धस्यैव परामर्शादिति, तदसत्, उक्तव्यवस्थाया तच्छब्दादिघटितस्थले उक्तानुपपत्तिविरहेऽपि तद्देशकालसंबन्धविशिष्टपरामर्शकतच्छब्दघटितोक्तवाक्ये विशिष्टवैशिष्ट्यप्रमापकत्वायोगात्, तावन्मात्रेणैवास्मदिष्टसिद्धेः । यत्तु प्रकृष्टप्रकाशश्चन्द्र इत्यादौ न स्वरूपमात्रविषयकप्रश्न, तस्य प्रागेवावगतत्वात्, किंतु विशिष्टविषयक इति, तन्मन्दम्, चन्द्रश्चन्द्रत्वजातिमान् चन्द्रपदवाच्य चन्द्रत्वविशिष्टस्येतरव्यावृत्तिप्रयोजकधर्मवाश्चेति विशिष्टविषयकनिश्चयवतोऽपि तादृशप्रश्नदर्शनेन त्वन्मतेऽप्यनिस्तारात् ॥

अथ किंशब्दस्य जिज्ञासिते शक्तिः, जिज्ञासितत्वं चोद्देश्यवाचकपदसमभिव्याहृतकिंपदस्थले स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकरूपावच्छिन्नोद्देश्यतानिरूपिततादृशधर्मव्याप्यधर्मावच्छिन्नविधेयताशालिबोधविषयकेच्छाविषयत्वम्; एवं चोक्तविषयज्ञानानां सिद्धत्वेऽपि प्रकृष्टप्रकाशश्चन्द्र इति ज्ञानविशेषस्यासिद्धत्वान्न प्रश्नादिविरोध इति चेत्,

न, ममापि ममानविभक्तिकपदान्तरसमभिव्याहृतकिंपदस्य स्वसमभिव्याहृतपदार्थतावच्छेदकतद्व्याप्यधर्मतदुभयनिरूपिततदाश्रयनिष्ठविषयताशालियोधविषयकेच्छाविषये शक्तत्वा दुक्तविधबोधान्तरस्य सिद्धत्वेऽपि प्रकृष्टप्रकाशत्वाश्रिनिरूपितचन्द्रनिष्ठविषयताशालिबोधस्य प्रागसिद्धत्वेन प्रमान्नुपपत्तेरभावात् । न चैतादृशविषयताशालिबोधो न भवदाचार्यसमत इत्यपसिद्धान्त इति वाच्यम्, सिद्धान्तसग्रह तृतीयपरिच्छेदे 'अन्ये तु' इत्यादिनैतन्मतस्य दीक्षितश्रीचरणैरेव दर्शितत्वादिति । परे तु अज्ञाते किंपदस्य शक्ति, उत्तरवाक्ष्याज्ञाननिवर्तकबोधजनक शब्द, एव चाज्ञाननिवर्तकशक्ते पूर्वज्ञानेऽसत्त्वात् न प्रमानुपपत्ति, प्रकृष्टप्रकाशश्चन्द्र इति वाक्यजन्यबाधे तादृशशक्ते सत्वाच न प्रतिवचनानुपपत्तिरिति वदन्ति ॥

एव च 'तत्त्वमसि' इत्यादिवेदान्तमहावाक्येष्वपि तात्पर्यानुमापकलिङ्गानुरोधादखण्डार्थपरत्वमङ्गीकार्यम् । तथा हि— 'उत तमादेशमप्राक्ष्यो येनाश्रुत श्रुत भवति' इत्युपक्रमे एकविज्ञानेन सर्वविज्ञान प्रतिज्ञातम्, तच्च प्रतिपाद्यस्यैव परमार्थता विना नोपपद्यते । न हि मतान्तरे ब्रह्मविज्ञानेन कथमपि वियदादीना ज्ञातत्व निर्वहति । सिद्धा-

न्ते तु तत्त्वत इत्यध्याहारेण यस्मिन् श्रुते सर्वं श्रुततत्त्वाभिन्नं भवतीत्यर्थलाभाच्चेतनाचेतननिखिलतत्त्वभूतस्य ब्रह्मणः श्रुतत्वेन सन्निवेशयति । न वा तत्त्वत इत्यस्याप्यध्याहार आवश्यकः; 'येनाश्रुतं श्रुतं भवति' इत्यस्य अश्रुतं सर्वं यदभिन्नश्रुताभिन्नं भवतीति वाक्यार्थपर्यवसानात् । अध्याहारोऽपि न दोषाय, परेणापि यथाश्रुतस्य योजयितुमशक्यत्वात् । फलत इत्यध्याहारेण योजने तु ब्रह्मज्ञाननिखिलप्रपञ्चज्ञानयोर्यैःकिंचिदेकफलसाधनत्वस्यानुत्कर्षकरत्वेनोपक्षेपायोगात्; यावतां तत्फलानां ब्रह्मज्ञाननिरपेक्षाणां तेन सिद्ध्यभिधानायोगान्मोक्षरूपैकफलकत्वस्य काकदन्तादिज्ञाने नितरामदृष्टेश्च । यथाकथंचित्तदुपयोगाभ्युपगमे चानुत्कर्षकरत्वं सुस्थितम् । तथा च ब्रह्मैव जगतस्तत्त्वं न त्वन्यदिति पर्यवस्यति ॥

तमेव चार्थम् 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादिना गुडजिह्विकान्यायेनोपपादयति । तस्य चायमर्थः— हे सोम्य, यथा एकेन मृत्पिण्डेन विज्ञातेन सर्वं मृण्मयं तन्मृत्पिण्डविकारजातं तत्त्वतो विज्ञातं स्यात्; शरावादेः तत्कार्यस्य पारमार्थिकत्वादिदं न युज्यते इति शङ्कां निराकरोति—वाचारम्भणं वागालम्बनं विकारो नामधेयमात्रं न परमार्थ इत्यर्थः; अयं

पण्डित इति नाममात्रम्—इत्यादौ तथा दर्शनात्, मृत्तिकेति तन्मृत्पिण्डेत्यर्थः, इतीति प्रकारार्थक इत्यादिकमेवेत्यर्थ, सत्यं पारमार्थिकमिति, एवमुपक्रान्तेऽर्थे उपपत्तिर्दर्शिता। तामेव च प्रकटीकर्तुं निखिलजगन्निमित्ताभिन्नोपादानत्वम् 'सदेव' इत्यादिना दर्शितम्, 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इत्युपक्रमाविरोधेन उपसंहृतम्, अभ्यस्तश्चायमेवार्थो नवकृत्व, अपूर्वं चेदमात्मसत्त्वं प्रमाणान्तराप्रसक्ते, फलं च 'यावन्न विमोक्ष्ये अथ सपत्स्ये' इति दर्शितम्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानादेवार्थवादोऽप्यर्थ सिद्ध इति। एवं चोपक्रमादितात्पर्यलिङ्गपर्यालोचने ब्रह्मान्यस्य सर्वस्यातात्त्विकत्वप्रतिसंधानात्तत्त्वावेदकत्वेन प्रागवधृताना वेदान्ताना तन्मात्रपरत्वं सिध्यतीति सर्वं चतुरश्रम्॥

यत्तु एकविज्ञानेन सर्वविज्ञानस्य सादृश्यप्राधान्याभ्यामुपपत्ते न प्रपञ्चमिथ्यात्वपरमेतद्वाक्यम्, 'वाचारम्भणम्' इत्यादेरपि नोक्तोऽर्थ, किं तु मृत्तिकेत्यादि वैदिकमेव नाम धेय नित्य धार्यं सर्वदा ज्ञातव्यमित्यर्थ। सत्यमित्यस्यार्थोऽव्यभिचारीत्यर्थ। वाचा वागिन्द्रियेणारम्भण व्युत्पादन यस्य तत् वाचारम्भण साङ्केतिक नाम विकार विविधप्रकार प्रकारप्रकारिणोरभेदात् विविधप्रकारवदित्यर्थ। साङ्केतिकनामानि पुरु-

धर्मितवैचित्र्येण विविधप्रकाराणि भवन्तीत्यनित्यानि । न हि नित्यं पुरुषोत्प्रेक्षया भवतीत्युक्तं भवति । तथा च नित्यं ह्यर्थेनौत्पत्तिकसम्बन्धवत्त्वात् परानपेक्षं प्रधानम् अनित्यं तु काल्पनिकशक्तिमत्त्वात्तदपेक्षमप्रधानं भवतीत्यर्थः पर्यवसितः । तथा च यथा प्रधानसंस्कृतज्ञानादप्रधानं साङ्केतिकमपि ज्ञातार्थमिव भवति तज्ज्ञानप्रयोजनप्रयोजकज्ञानविषयो भवतीत्यर्थः, एवं प्रधानस्य परमात्मनो ज्ञानादप्रधानं ज्ञातमिव भवतीति । इदं च 'येनाश्रुतं श्रुतं भवति' इति प्रतिज्ञातार्थोपपादनपरं न तु 'यथा सोम्य' इत्यादिदृष्टान्तोपपादनपरम्, प्राधान्यात्तत्परिज्ञानात्प्राकृतांशोऽपि पुरुषः । विद्वानित्युच्यते सद्भिरेव नित्यं परात्मविदिति । 'यथा सोम्य' इत्यादेश्चायमर्थः — यथा सोम्यैकेन मृत्पिण्डेन तत्सादृश्यात्सर्वं मृण्मयं विज्ञातं स्यादिति । एवं च सादृश्यप्राधान्याभ्याम् एकविज्ञानेन सर्वविज्ञानमुपपादितं भवति । ब्रह्मवादोक्त्याख्या तु न युक्ता, एकमृत्पिण्डविज्ञानात्सर्वमृद्विकारज्ञानायोगात्मृतनिकृन्तनिकादृष्टान्ते तस्या अन्यायवत्त्वेन कार्यान्तरानुपादानत्वात् एकपिण्डादिपदानां वैयर्थ्यापत्तेश्च । न हि सत्यस्य विज्ञानादसत्यस्य विज्ञानम्, शुक्तिकाज्ञाने रजतज्ञाननिवृत्तेरेव दर्शनादिति ॥

तन्मन्दं साङ्केतिकनाम्नो गगर्यादेरपि विविधप्रकारत्वाभावात्; न हि गगरीशब्दः पुरुषमतिवैचित्र्यात् प्रकारान्तरमाप्नोति । पुरुषभेदेन साङ्केतिकाः शब्दाः भिद्यन्त एवेति चेत्, किं घात:? तावता गगर्यादिशब्दानां रूपान्तरापत्त्यभावात् । विविधप्रकार इत्यस्य विविधार्थको भवतीत्यर्थाभ्युपगमे संस्कृतस्यापि हर्यादिशब्दस्य विविधार्थकत्वात्संस्कृतसाङ्केतिकयोरविशेषः । ननु सत्यमेवैतत् तथापि साङ्केतिकस्य नानार्थत्वं पुरुषविशेषापेक्षं संस्कृतस्य तु तदौत्पत्तिकमिति विशेषोऽस्तीति चेत्, तर्हि सापेक्षत्वनिरपेक्षत्वे एव अप्राधान्यप्राधान्यनिर्वाहके श्रुत्या दर्शनीये; न तु प्रधानाप्रधानसाधारणं विविधार्थकत्वमित्यहो श्रुतिव्याख्याननैपुण्यम् । विकारशब्दश्चैवमाधुनिकलक्षणाक्रान्तः स्यात् । एवं नामधेयमित्यत्र धार्यं नामेति साङ्केतिकसाधारणम्, नित्यधार्यता तु लक्षणागम्या बाधिता च । न हि विद्वद्भिरपि नित्यं धार्यते । सत्यमित्यस्याव्यभिचरितार्थकपरत्वमपि न विना लक्षणाम्; तत्त्वं च न तावदेकार्थकत्वम्, हर्यादिसंस्कृतपदाव्यापकत्वात्; पुरुषनिरपेक्षार्थकत्वं तदिर्युक्तौ च भवति श्रुतिकचाकर्षणं स्वमनोरथावाप्तये न तु श्रुतिहृदयानुगुण्याय; अत्रापि च प्राधान्यहेतुः निरपे-

सत्वमेव वाच्यं नान्यदिति । शब्दस्य स्वार्थकत्वे मृत्तिकाशब्दस्य स्वरूपपरत्वं निर्मूलम्; स्वरूपार्थकत्वे च तत्तुल्यानां मृत्स्नामृदादिपदानां सत्यत्वादवधारणानुपपत्तिरिति संकोचेन तन्नयनमावश्यकम् । एकेनेत्यादौ एकपदपिण्डपदयोर्वैयर्थ्यं तवापि दुष्परिहरम्, एकवचनेनैवैकत्वलाभात् । जात्येकवचनशंकानिवृत्तिस्तदुपादानफलमिति तु ममापि तुल्यं मयट्वैयर्थ्यं च तवाधिकम् । एतादृशविज्ञानस्यानुत्कर्षकारित्वादप्रकृतानुपयोगः; न हि काकदन्तकपिगुदाभ्यामपि विज्ञाताभ्यां पदार्थत्वाभिधेयत्वादिना तत्सदृशं सर्वं जगन्न विज्ञायते; अत्यन्तसादृश्यस्य च परमेश्वरस्य पद्मादिषु, किं बहुना! ब्रह्मादिष्वप्यनुपपत्तेः । तस्मात् परकीयापव्याख्यानस्य हेयत्वात् उक्त एवार्थो रमणीयः । तत्र च यथा सत्यब्रह्मविज्ञानात्सर्वविज्ञानं तथोपपादितं प्राक् । सिद्धान्ते अन्त्यावयव्यसंप्रतिपत्तेः नखनिकृन्तनिकादेरपि स्वकार्यशकलाद्युपादानता संभवत्येव क्षीरादेर्दध्याद्युपादानत्ववदित्याद्यन्यत्र विस्तरः । एवं च ब्रह्मातिरिक्तस्य सर्वस्यानिर्वाच्यत्वात्सर्वमुक्तौ न भेदावस्थानशङ्का ॥

किं च मुक्तत्वभेदयोः व्याप्तिग्राहकतर्काभावादप्रयोजकोऽयं हेतुः । यत्तु यदि मुक्तो भिन्नो न स्यात् तदा तस्य

च । अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः’ ‘यस्मात्क्षरम-
तीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि वेदे लोके च
प्रथितः पुरुषोत्तमः’ इत्यादिभिर्ज्ञानित्वाज्ञानित्वेश्वरत्वेशित-
व्यत्वोत्कृष्टत्वापकृष्टत्वादिभिर्भेदवचनं तवास्यप्रतिकूलम् ;
आसंसारमविद्याकल्पितभेदस्य जीवस्वरूपस्याभ्युपगमात् स्व-
प्रयोजकाविद्याविलयं विना भेदनिवृत्त्ययोगात् । ईश्वरानुभव-
गम्यत्वाद्भेदः सत्य इत्यपि न, ईश्वरज्ञानस्य असत्त्वेन शशविषा-
णविषयकत्वाभावे असर्वज्ञत्वापत्तेः ; तद्भावे शशविषाण एव
व्यभिचारात् । पारमार्थिकत्वेन तादृशानुभवगम्यत्व च जग-
त्यसिद्धम् । किं चेशस्य सर्वज्ञत्वमागमेनैव ग्राह्यम् । तथा च
तात्पर्यलिङ्गसचिवेन तेनैवाद्वैतपरमार्थत्वद्वैतमिथ्यात्वयोर्दृढी-
करणे उक्तानुमानस्य प्रमाणबाधः । न चैवमीश्वरस्य भ्रान्त-
त्वापत्तिः ; भ्रान्तिर्हि तद्भिन्ने तदात्मताप्रत्ययः न तु बाधित-
विषयकप्रत्ययमात्रम्, शशविषाणमसदिति प्रत्ययस्य तुच्छं
न घट इत्यादिप्रत्ययस्य च भ्रान्तित्वापत्तेः, एवं च अनि-
र्वाच्यं जगत्तात्त्विकत्वेनाविषयीकुर्वतोऽनिर्वाच्यत्वेन वि-
षयीकुर्वतश्च भगवतः प्रत्ययस्य भ्रान्तित्वाभावेन तस्य
भ्रान्तत्वापादनायोगात् । जैवास्तु प्रत्यया आरोप्यानात्मक-

मधिष्ठानं तदात्मनावगाहन्ते इति भवन्ति भ्रान्तय ॥

यत्तु 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता.। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' इति, 'यदा पश्य पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जन परम साम्यमुपैति' इत्यादिवचनैर्मुक्तेश्वरयोर्भेदगर्भसाम्योक्तेर्भेदस्य मुक्तिकालीनत्वावगमात् पारमार्थिकत्वमिति, तदपि मन्दम्, समान एको धर्मो येषा ते सधर्माण तेषा भाव साधर्म्यमिति व्युत्पत्त्यादरे भेदाप्रतीते, समानाधिकरणसमानजातीयेत्यादौ समानशब्दस्यैकस्मिन्नपि प्रयोगबाहुल्यात्, निरञ्जन साम्यमुपैतीत्युक्त्यैव निरञ्जनत्वादिना साम्यलाभात्, परमपदवैयर्थ्यप्रसङ्गेन परमसाम्यस्याभेदरूपताया एव वाच्यत्वाच्च। 'परेऽव्यये सर्व एकीभवन्ति' 'ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मभावायोपपद्यते। तद्भावभावमापन्नस्ततोऽसौ परमात्मना। भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्। विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं क करिष्यति' इत्यादिश्रुतिस्मृतिशतानुरोधादुक्तार्थस्य ग्राह्यत्वात्। न चैतानि वाक्यानि सादृश्यादिगौणार्थपरतया नेयानि, स्वारस्यहाने हेत्वभावात्, स्वत प्रमाणे

प्रमाणान्तरानुसरणनैष्फल्यात्; पौरुषेयं हि वाक्यं दार्ढ्याय संवादमपेक्षते न निर्णीततात्पर्यको निर्दोष आगम इति ॥

ननु भेदमिथ्यात्वानुमानादिकं प्रमाणं न वा, आद्ये, मिथ्यात्वादेस्तात्त्विकत्वापत्तिः; द्वितीये भेदतात्त्विकत्वापत्तिरिति चेत्, न, भेदमिथ्यात्वानुमानादेरनिर्वाच्यभेदबोधकत्वेन तात्त्विकप्रामाण्यशून्यत्वेऽपि भेदसत्त्वापादकाभावात् । मिथ्यामिथ्यात्वकत्वेन तदापादनं च प्रागेव निरस्तम् । यत्तु भेदप्रत्ययो यथार्थः, भेदमिथ्यात्वप्रत्ययस्यायथार्थत्वात्; न चात्र हेतुसाध्ययोर्व्यधिकरणत्वं दोषः, तद्धि पक्षधर्मताविघटनाद्व्याप्तिविघटनाद्वा अतिप्रसङ्गाद्वा दोषः स्यात् । नाद्यः, पक्षधर्मताया अनावश्यकत्वात्; स्वयमसिद्धं कथं साधयतीति चेत्, न ब्रूमोऽसिद्धं किं तु पक्ष एव; तत्रासत्कथं तत्र साधयतीति चेत्, अथ तत्र सत्कथं तत्रापरं साधयेत्; दर्शनादिति चेत्, समम्, दृश्यते हि चक्रभ्रमात्कुलालासत्त्वनुमानम्, तद्वान् देशः पक्ष इति चेत्, किमेवं लौकिकी प्रतीतिः, यत पक्षधर्मतावश्यंभावादित्थं कल्प्यते? नाद्यः असिद्धेः; न द्वितीयः परस्पराश्रयप्रसङ्गात् । किं च रसाद्रूपानुमाने यादृशी पक्षधर्मता न तादृशी धूमादग्न्यनुमाने; तत्र यथा यथादर्शनं व्यवस्था तथा क्वचित्पक्षधर्मता क्वचिन्नेति व्यवस्था किं नाश्रीयते । न

द्वितीयः, चक्रभ्रमणादौ वैयधिकरण्येऽपि व्याप्तिदर्शनात् । किं च धूमादग्न्यनुमाने यदि समानाधिकरणयोरेव व्याप्तिः तदा धूमदर्शनात् तदर्वाग्भागे वह्न्यर्थिनः प्रवृत्तिर्न स्यात् । अथ तत्रापि य ऊर्ध्वभागे धूमवान् सोऽर्वाग्भागेऽग्निमानिति व्याप्तिरिति चेत्, न, स्वतो व्यधिकरणयोर्वाचोभङ्ग्यैव सामानाधिकरण्ये अनुमानव्यवहारस्य काल्पनिकत्वप्रसङ्गात् । समानदेशकालयोर्व्याप्तिदर्शनेऽपि भिन्नकालयोर्यथा व्याप्तिर्दर्शनबलाद्ग्राह्या तथा भिन्नाधिकरणयोरपीति को दोषः । तृतीयस्तु दर्शनादर्शननिरसनीय इति संक्षेप इति ॥

तत्र, यत् उक्तप्रत्ययस्य अयथार्थत्वं मिथ्याभूतायथार्थत्वावगाहित्वं मिथ्यात्वं च नात्यन्तासत्त्वम्, किं त्वनिर्वाच्यत्वम्; न च तावता भेदप्रत्ययस्य पारमार्थिकभेदविषयकत्वरूपसत्यत्वसिद्धिः, भेदतन्मिथ्यात्वयोर्द्वयोरेव अनिर्वाच्यत्वोपपत्तेरसकृदावेदितत्वादिति । किं च व्यधिकरणस्य हेतोर्न साध्यगमकता, वैयधिकरण्यस्य व्याप्तिभञ्जकत्वात् । तथाहि— व्याप्तिस्तावदविनाभावो व्यापकसामानाधिकरण्यं वा स्यात्; नोभयमपि साध्यशून्यदेशवर्तिनो हेतोः सम्भवति । स्यादेतत्, यदि तावन्मात्रं व्याप्तिः स्यात्; न तथा, किं तु साध्याभावप्रयोज्याभावप्रतियोगित्वमपि, एवं च कुलालाश्रयभावे

चक्रभ्रम्यभावाद्व्यधिकरणचक्रभ्रम्यभावोऽपि कुलालासत्त्य-
भावप्रयोज्य इति चक्रभ्रमे कुलालासत्तिव्याप्यत्वमप्रत्यूहम् ;
एवमधोदेशे नदीपूराभाव पूर्वदेशस्थवृष्ट्यभावप्रयोज्य इति
व्यधिकरणस्यापि नदीपूरस्योर्ध्वदेशस्थवृष्ट्यनुमापकत्वमिति चे-
त्, न, कुलालासत्त्यादेः कारणतावच्छेदकादिभिन्नस्य चक्रभ्र-
म्याद्यभावप्रयोजकाभावप्रतियोगित्वे मानाभावात् । ननु कु-
लालासत्तिः कुलालकर्त्र्युपादानत्वम् उपादानत्वञ्चात्र ताद-
शकृतिपर्यवसितम् तदभावश्च चक्रभ्रम्यभावप्रयोजक , नोदना-
ख्य कुलालसंयोगो वा सा, एवं च तदभावयोः कारणाद्य-
भावतया चक्रभ्रम्यभावप्रयोजकत्वं सम्भवतीति चेत्, न,
एवं सति ईदृशकुलालासत्तिचक्रभ्रम्योः वैयधिकरण्याभावेन
व्यधिकरणयोर्व्याप्तावदृष्टान्तत्वात् । न च चक्रभ्रमिदर्शना
चक्रसमीपे कुलालोऽस्तीत्यनुमितिः सर्वानुभवसिद्धा, सा कथ-
मुपपद्यत इति वाच्यम्, कुलालवद्देशनिष्ठसामीप्यप्रतियो-
गित्वशून्ये चक्रे भ्रमेरवृत्तित्वदर्शनादेव तत्सम्भवात् । न
चैवमपि कुलालोद्देश्यकचक्रसमीपवृत्तित्वादिविधेयकानुमि-
त्यनुपपत्तिर्दुर्वारैवेति वाच्यम्, स्वाश्रयदेशनिष्ठसामीप्यप्रति-
योगित्वसम्बन्धित्वस्य चक्रसमीपवृत्तित्वव्याप्यतया तेन ताद-
शव्याप्तिग्रहदशायां तदुपपत्तेः, अन्यथा कल्पनागौरवात् ।

किं पेशादिकमपि न युक्तम्, अनवच्छिन्नमूलायैव धूमस्य वह्निगमकत्वात्तस्य वह्निमानदेशत्वानपायात् । प्रपञ्चितं चैतत्प्रमाणतत्त्वविवेके ॥

एकजीववादे तु न काप्यनुपपत्तिः । नन्वेकस्य जीवत्वे तस्य भेदनिघ्नत्वात्तन्नाशो वर्षेण; तथा च न कदाप्यद्वैतनिश्चयो भवेत्; एवं च अनिर्मोक्षप्रपञ्चपारमार्थिकत्वापत्तिरिति चेत्; न, यथा जीवं स्वातन्त्र्याभिमानस्यानादित्वेऽपि पुण्यपरिपाकवशात् भगवदनुग्रहादिना तन्निवृत्तिरेवमनादिभवसंचितभेदवासनस्यापि पुंसः समाराधितपरमपुरुषस्य तदनुग्रहात्तन्निवृत्तिसंभवात् मुक्तिश्रुतिप्रामाण्याच्च । न च शुकवामदेवादिमुक्तिश्रुतिवत्सा अर्थवाद एवेति युक्तम्, यतः अर्थवादो हि पुरुषस्य प्रवर्तनायाभ्युपयुज्यते; असति च पुरुषार्थे कार्योपयोग इति त्वमेव सुचिरं विभावय । न चैकजीववादे प्रमाणाभावः, 'मायां तु प्रकृतिं विद्यात्' इति श्रुतप्रकृत्यैक्ये लाघवानुसंधानेन उपाध्यैक्ये तदुपहितैक्यस्य 'जीवेशावाभासेन करोति' इत्यादिश्रुत्युपोद्बलितन्यायेन सिद्धेः । यत्त्वेतावन्तं कालं कस्याप्यमुक्तौ अनाश्वासादग्रेऽपि मुक्तिरतुल्यन्यायेन न स्यादिति, तदयुक्तम्, बहुजीववादेऽपि एतावन्तं कालम् अमुक्तस्यास्य कथमग्रे मुक्तिः

स्यादिति दोषसाम्यात् अनाश्वासहेतोस्तुल्यत्वात्। प्रमाणबलात्तन्निरासश्च प्रकृतेऽप्यक्षतः। यत्तु सत्योपाधिकसत्यभेदवाददूषणं तदपि न, आमुक्तेर्भेद एव स्याज्जीवस्य च परस्य च– इति तदुक्त्या संसारदशायां भेदाभावानभ्युपगमेन ईशे जैवसुखाद्यनुसंधानापादनायोगात् अग्रे च औपाधिकभेदनाशे भेदाभावोऽप्यत्यूह इति न मुक्तपरैक्यविरोधः॥

ननु मुक्तौ परमेश्वरस्वरूपातिरिक्तं जीवस्वरूपमस्ति न वा; आद्ये भेदो नास्तीति पारिभाषिकं स्यात्; न द्वितीयः जीवस्य मुक्त्यनन्वयप्रसङ्गादिति चेत्; मैवम्, नित्यं हि जीवस्वरूपं परमात्मैव अनित्यं च सांसारिकं रूपम्, एवं चौपाधिकसांसारिकरूपस्य परब्रह्मणि लय एव मुक्तिः नित्यरूपेण च मुक्त्यन्वय इति न किंचिदसमञ्जसम्। किं च त्वन्मते भेदाभावेऽपि यथा ईशतदानन्दस्वरूपद्वयं स्वीक्रियते एवं तेषामप्यस्तु। ननु मया विशेषोऽभ्युपेयते इति चेत्, किमातः! त्वन्मते सविशेषात्यन्ताभेद इव मन्मते निर्विशेषात्यन्ताभेदेऽपि व्यक्तिद्वयाभ्युपगमसंभवात् स्वरूपस्यैव विशेषत्वसंभवाच्च। यद्यप्येवं संसारदशायामपि विना भेदं व्यक्तिद्वयाभ्युपगममात्रेण सर्वनिर्वाहे आमुक्तेर्भेदाभ्युपगमो व्यर्थ आपतस्यते; तथापि प्रत्यक्षागमरूपप्रमाणद्वयतात्त्विक-

त्वनिर्वाहाय भेदोऽप्यवश्य वाच्य , तस्य स्वाभाविकत्वे न तदभाव कदापि इति अद्वैतश्रुतिरप्रमाण वा स्यात्, अ-स्वारसिकार्था वा इति भेदप्रत्यक्षाभेदश्रुत्यविरोधाय भेदस्यौ-पाधिकत्वाभ्युपगम इति युक्तमुत्पश्याम । एव च मुक्त पूर्णानन्दनिर्भेदचिन्मात्रात्मक इति सिद्धम् ॥

पूर्णानन्दशरीरमद्वयमखण्डात्मप्रकाशात्मक
सत्यानामपि सत्यमन्तररहित धर्मादिभेदोज्झितम् ।
या ब्रह्म प्रतिपादयत्युपनिषद्देवी तदीयाशय
स्पष्टीकारचणौ च या मुनिवरौ ता तौ च नित्य नुम ॥

अखण्डानन्दविज्ञानसत्यान्तररहितात्मनि ।
वासुदेवे परब्रह्मण्यमला भक्तिरस्तु न ॥ २ ॥

चिर जीवन्तु वसुधा गेहे शूरा प्रलापिन ।
श्रीमत्परमहसाना न ते निन्द्या कदाचन ॥ ३ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यश्रीमच्छकरभगवत्पादपूज्य
चरणानुग्रहलब्धब्रह्मविद्यावैशद्यस्य श्रीमदखण्डानन्दसरस्वती
सारस्वतशास्त्राभ्यासानुभवसमेधमानयुक्तिशतधारो धारित
विपक्षगिरिनिचयस्य भद्रप्रयम्ननस्य कृतौ
लघुश्रुतिमतोद्योताख्य प्रकरण समाप्तम् ॥



॥ ॐ ॥

# ॥ गुरुश्रुतिमतोद्योतः ॥

पूर्णज्ञानाय निर्भेदपरमानन्दमूर्तये ।
व्यासशंकररूपाय श्रीपरब्रह्मणे नमः ॥

विमतो भिन्नः मुक्तत्वात्, यदित्थं तत् तथा यथा संप्रतिपन्नमित्युक्ते, शुद्धचिन्मात्रे मुक्ते भेदस्याभ्युपगमात् सिद्धसाधनम्, मुक्तिदशाया धर्मिविशेषणत्वे परं प्रति असिद्धिः; सर्वमुक्तौ कालानभ्युपगमात्, सर्वमुक्तिकालस्य त्वन्मतेऽप्यलीकत्वाच्च । मुक्तिदशायां कालो नाभ्युपेयते इति व्याहतमिति चेन्न, तत्त्वज्ञानस्य स्वसमानविषयकस्वसमानाधिकरणाज्ञानतत्प्रयुक्तद्वयाधिकरणैककालपूर्वत्वाभावनियमाभ्युपगमेन फलतस्तन्निरासात् । एतेन मुक्तिकालावच्छिन्नभेदवत्त्वं साध्यमित्यपि परास्तम्, परं प्रति साध्याप्रसिद्धिसिद्धसाधनयोः विवक्षाभेदेन दुष्परिहरत्वात् । अत एव पारमार्थिकभेदोऽपि न साधनार्हः । यत्तु व्यवहाराबाध्यभेदः साध्यते इति, तन्न असत्, स्वशब्देन दृष्टान्तोक्तौ सिद्ध-

साधनात्, पक्षोक्तावप्रयोजकत्वात्, न हि परमात्मनि स्वज्ञानाबाध्यभेदानभ्युपगमे किंचित् बाधकमस्ति । यत्तु मुक्तत्वात् इत्यस्य बन्धससर्गाभाववत्त्वात् इत्यर्थ इति, तत् असत्, अभाववत्त्वात् इत्यस्यैव हेतुत्वसंभवेनेतरांशवैयर्थ्यात् । यत्तु अत्र केनचित् उक्तम् एवं मति प्रमेयत्वादीनां केवलान्वयित्वभङ्गप्रसङ्ग, तत्रापि विषयतायाः एव केवलान्वयित्वम् इत्यस्य सुवचत्वात् इति, तदुपहसनीयमेव, प्रमाविषयतात्वेन हेतुत्वविवक्षाया समानाधिकरणव्याप्यतावच्छेदकान्तराघटितधर्मस्यैव व्याप्यतावच्छेदकतावादिप्राचीनमते व्याप्यत्वासिद्धेर्दुर्वारत्वात् । नव्यमतेऽपि आधिक्येन निग्रहे तस्यानुत्तरत्वात् । अभ्युपगतश्च तान्त्रिकैराधिक्येन निग्रह । स च हेत्वाधिक्यवत् हेतुविशेषणाधिक्येऽपि तुल्य । अन्यथा वह्निमान् काकदन्तविषयकज्ञानविषयधूमवत्त्वादित्यपि प्रयुञ्जानो न निगृह्येत । एतेन बन्धात्यन्ताभावहेतुतापक्षोऽपि प्रत्युक्त ॥

अथायमाशय, मुक्तत्वात् इति एकेन पदेन श्रोत्रोक्तस्य स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितस्यापि हेतुतावच्छेदकत्वं युक्तम्, स्वरूपसत्त्वरूपाया साध्यसामानाधिकरण्यावच्छेदकताया. तार्किकशिरोमण्यादिभिर्दू-

पित्तत्वात्, पारिभाषिक्याश्च व्याप्यतावच्छेदकताया व्याप्यतावच्छेदकधर्मान्तरघटितधर्मसाधारण्यात्, आधिक्येन निग्रह परमवशिष्यते, न च सोऽपि, एकप्रयत्नेनैव विशिष्टार्थलाभेन प्रयत्नान्तराभावात्, काकदन्तेत्यादौ च नैकेन पदेन विशिष्टार्थलाभ इति यत्नान्तरस्यावश्यकतया आधिक्येन निग्रहो दुर्वार इति, नैवम्, निरुपपदमुक्तिशब्देन आत्यन्तिकदुःखध्वंसस्यैव लाभेन दृष्टान्तस्य साधनविकलत्वात्, तदनुरोधेन श्रुतार्थमपहाय यद्वत्तादृशासाधारणार्थविवरणे लक्षणाश्रयणे अभावरूपलब्धये एव लक्षणामात्रेण निर्वाहे निष्प्रयोजनगुर्वर्थलाक्षणिकताया अपि आधिक्यरूपनिग्रहापादकताया दुर्वारत्वात्। यद्यपि मुक्त इति पक्षनिर्देश सिद्धसाधन स्यात्, संसारान्मुक्त इत्युक्तावप्रसिद्धविशेष्यत्वादिशङ्का स्यादिति तन्निरासाय विमतग्रहणम्, तथा च यदि विशेष्यो मुक्तात्मा अप्रसिद्ध स्यात् तदा किमाश्रया विमति स्यात्, यदि विशेषण भेदोऽप्रसिद्ध स्यात् तदा किमुल्लेखिनी विमति स्यात्, यदि वा मुक्तात्मनि भेद सिद्धो बाधितो वा भवेत्, तदा न्यतरपक्षनिश्चयात् न विमति स्यात्, अस्ति चेयम्, अतो नाप्रसिद्धविशेष्यत्वाप्रसिद्धविशेषणत्वसिद्धार्थत्वप्रमाणबाधा इति, एतन्नोदाहरणेऽपि सप्रतिपक्षग्रहणस्य साध्यसाधनवैकल्या-

युद्धारः प्रयोजनं व्याख्यातम् अन्यथा यथा निगडमुक्त इति अवक्ष्यत् इति, तन्न मन्दम्; विमतमिति उक्तिमात्रेणोक्तशङ्का-निरासे विमतं मिथ्या दृश्यत्वात् संप्रतिपन्नवदित्युक्तिमात्रे-णोद्दशदोषनिवारणसम्भवात् तत्र तवाश्रयासिद्धयप्रसिद्धवि-शेषणत्वाद्युद्भावनासंगतेः । प्रकारान्तरेणोद्भावनपरिहारौ च प्रकृतेऽपि तुल्यौ ॥

यत्तु मुक्तस्य भेदमात्रानङ्गीकारेणाक्षिपन्तं प्रति प्रकृतप्रयो-गः, नातः सिद्धसाधनादि इति, तन्न, मुक्ते सर्वमुक्त्यन्यद-शायां भेदमात्रानङ्गीकर्तुर्वादिन एवाभावात् । सर्वमुक्तौ कालानभ्युपगमात्, भावाद्वैते सिद्धसाधनात्; ध्वंसवदभावा-न्तरस्यापि तन्नोपगमात् । यदपि प्रागवस्थायां येन भेदेन विशिष्टस्तेनैव भेदेन मोक्षेऽपीत्ययमत्रार्थो विवक्षित इति न कश्चिद्दोष इति; तदपि न, उक्तवाचोभङ्गया मुक्तिप्राक्कालाव-च्छिन्नभेदवत्त्वं साध्यम् इति विवक्षायां सिद्धसाधनात् । यदि च मुक्तिकालावच्छिन्नश्चेत्रः स्वनिष्ठयावद्भेदवानिति साध्यम्, पक्षतावच्छेदककालावच्छिन्नत्वविशिष्टसाध्यानुमि-तेरुद्देश्यत्वाच्च न सिद्धसाधनादीति विवक्षितमित्युच्यते; तदा अप्रयोजकतैव, विपक्षे बाधकाभावात्; अन्यथा मुक्तः स्वनिष्ठदुःखप्रागभाववानित्यादेरपि अनाभासत्वप्रसङ्गात् ।

आगमबलादेषामाभासत्वमिति चेत्, तुल्यम् प्रकृतेऽपि । अनवच्छिन्नविशेषणतया भेदवत्त्वं साध्यमतो न सिद्धसाधनचेत्यपि प्रत्युक्तम् । अथ परमात्मप्रतियोगिकभेदवत्त्वं साध्यम्; बन्धप्रध्वंसाधिकरणत्वं च हेतुः, अतो न सिद्धसाधनादीति चेत्, नैवम्, परमात्मशब्देन जगत्कर्तृत्वादिविशिष्टविवक्षायां सिद्धसाधनात्; सत्यादिपदतात्पर्यविषयविवक्षायामपि नैव मुक्तिकालावच्छिन्नतद्भेदस्य साधने मुक्तिपदेन सर्वमुक्तिविवक्षणे अप्रसिद्धविशेषणता, तस्यास्त्वन्नीत्या अद्यापत्वे बाध , अनवच्छिन्नविशेषणतया तत्साधने च संदिग्धानेकान्तता, अनुकूलतर्कास्फूर्तौ पक्षान्तर्भावेन व्यभिचारसंशयस्यापि दूषकत्वात् । अत एव पक्ष. साध्यातिरिक्तपक्षधर्मातिरिक्तधर्मवान् मेयत्वात् इत्यादीनामसाधकता । स्पष्टश्चायमर्थो दीधित्यादाविति दिक् ॥

नन्वत्र न सिद्धसाधनमुद्भावनार्हम्, त्वया ब्रह्मातिरिक्तस्य सर्वस्यापि अप्रामाणिकत्वाभ्युपगमात्; न ह्यप्रामाणिकाभ्युपगमेन सिद्धसाधनोपन्यास प्रेक्षावतां युक्त , तथा सति अतिप्रसङ्गात् इति चेत्; नैवम्, यतो जल्पादौ सिद्धसाधनतोद्भावने उद्देश्यानुमिते स्वव्यधिकरणधर्मावच्छिन्नविषयताकान्यत्वेन पराभ्युपगम एव तन्त्रं न तु अनुमिति-

आगमबलादेषामाभासत्वमिति चेत्, तुल्यम् प्रकृतेऽपि । अनवच्छिन्नविशेषणतया भेदवत्त्वं साध्यमतो न सिद्धसाधनचेत्यपि प्रत्युक्तम् । अथ परमात्मप्रतियोगिकभेदवत्त्वं साध्यम्; बन्धप्रध्वंसाधिकरणत्वं च हेतुः, अतो न सिद्धसाधनादीति चेत्, नैवम्, परमात्मशब्देन जगत्कर्तृत्वादिविशिष्टविवक्षायां सिद्धसाधनात्; सत्यादिपदतात्पर्यविषयविवक्षायामपि नैव मुक्तिकालावच्छिन्नभेदस्य साधने मुक्तिपदेन सर्वमुक्तिविवक्षणे अप्रसिद्धविशेषणता, तस्यास्त्वन्त्री त्या अद्वैतपक्षे बाध, अनवच्छिन्नविशेषणतया तत्साधने च संदिग्धानैकान्तता, अनुकूलतर्कास्फूर्तौ पक्षान्तर्भावेण व्यभिचारसंशयस्यापि दूषकत्वात् । अत एव पक्ष. साध्यातिरिक्तपक्षधर्मातिरिक्तधर्मवान् मेयत्वात् इत्यादीनामसाधकता । स्पष्टश्चायमर्थो दीधितिप्रदादाविति दिक् ॥

नन्वत्र न सिद्धसाधनमुद्भावनार्हम्, त्वया ब्रह्मातिरिक्तस्य सर्वस्यापि अप्रामाणिकत्वाभ्युपगमात्; न ह्यप्रामाणिकाभ्युपगमेन सिद्धसाधनोपन्यास प्रेक्षावतां युक्त, तथा सति अतिप्रसङ्गात् इति चेत्; नैवम्, यतो जल्पादौ सिद्धसाधनतोद्भावने उद्देश्यानुमिते स्वव्यधिकरणधर्मावच्छिन्नविषयताकान्यत्वेन पराभ्युपगम एव तन्त्रं न तु अनुमिति-

दशायामपि तदभ्युपगमो नोचित, सदसतो सम्बन्धायोगात्, असतो निरधिकरणकत्वाच्चेति चेत्, मैवम्, अत्यन्तासत एव तथात्वाऽभ्युपगमात्, भेदस्य च अनिर्वाच्यत्वात्, न चानिर्वाच्यत्वासिद्धिः, ख्यातिबाधाभ्यामेव तत्सिद्धेः । तथाहि—शुक्ताविद रजतमित्यादिप्रतीतौ प्रकारीभूतो धर्मितावच्छेदकादितोऽन्यो न सन् बाध्यत्वात् इति तु सर्वानुमतम्, नापि अत्यन्तासत्, यतोऽत्यन्तासत्त्व नाहि सत्त्वेनाप्रतीयमानत्वम्, अनुभवविरोधात्, नापि निरवरूपत्व अपरोक्षत्वानुपपत्ते, प्रत्यक्ष हीन्द्रियार्थसन्निकर्षजन्यम्, न चासता इन्द्रियस्य सन्निकर्ष सम्भवति । किं च असद्रजत रजतत्वप्रकारेण भाति न वा, नाद्य अन्यथाख्यात्यापत्ते, तुल्ययुक्त्या भ्रमे परमार्थरजतस्यापि भानप्रसङ्गाच्च । न च परमार्थरजतभाने असदेव रजतमभादित्युत्तरलौकिकप्रत्ययविरोध, तथापि असति धर्मिसत्त्वानपेक्षस्य रजतत्वादेरभावेन असदेव रजतमिति रजतशब्देन असदुल्लेखायोगेनोत्तरकालिकप्रत्ययविरोधसाम्यात् । रजतत्वमसदेवेति चेत्तथापि रजतशब्देन तदुल्लेखानुपपत्तिरस्त्येव, रजतशब्दस्यासत्प्रवृत्तिनिमित्तकत्वाभावात्, प्रवृत्तिविषये अविद्यमानस्य प्रवृत्तिनिमित्तत्वायोगात्, रजत-

त्वशब्देन तदुल्लेखायोगाच्च, रजतावृत्ते रजतत्वशब्दार्थत्वायोगात् । पारमार्थिकस्य रजतत्वस्य असद्वृत्तित्वमनन्यगत्याऽपेयमिति तु स्ववचनविरुद्धम्, नि स्वरूपेण तस्मिन् तदभावात् । तस्मादकामेनापि अन्यथाख्याति अनिर्वाच्यख्याति निर्लोप्या । न चान्यथाख्यातिस्वीकारे विनिगमनाविरहेण रजतभ्रमे सर्वेषामेव रजतानां भानापत्त्या गौरवादसत्ख्यातिस्वीकार एव उचित इति वाच्यम्, रजतत्वादिशून्यत्वाविशेषेण कस्य वा असतो भ्रमविषयत्वं कस्य वा नेति विनिगमनाविरहेण त्वन्मतेऽपि महत्तरगौरवापत्ते दुर्वारत्वात्, प्रागुक्तानुपपत्तिश्चाधिका । असतामानन्त्यं तु जयतीर्थानुमतम्, उक्तं हि तेन । न द्वितीय, भ्रमात् रजतार्थिप्रवृत्त्यनुपपत्ते, तस्येष्टतावच्छेदकधर्मिसंसर्गानवगाहित्वात् । अन्यथाख्यातिनिरासश्चान्यत्र प्रपञ्चित. ॥

यत्तु भ्रमे अधिष्ठानस्यैव विषयता, स च केवलं स्वविषयं शुक्तिकाशकलं असद्रजतात्मना गृह्णाति इति भ्रमद्विषयं उच्यते, रजतज्ञानस्य शुक्तिविषयत्वं संविद्विरुद्धमिति चेत्, न, रजतज्ञानस्येति कोऽर्थः ? यदि रजतविषयस्येति तदा सिद्धि, यदि रजतमिति ज्ञानस्येति तदा परस्यैव संविद्विरोध, यदिदं रजतमिति भ्रमानपि सा शुक्तिरेवेति प्रतीते,

यदाकारं यद्विज्ञानं तत्तद्विषय इति परिनिष्ठितैव व्यवस्था । एवं च भ्रमस्य रजताद्यविषयकत्वान्न भ्रमे बहिरिन्द्रियसन्निकर्षापेक्षा, शुक्तिसन्निकृष्टेनैवेन्द्रियेण दोषसहकृतेन भ्रमोत्पादाभ्युपगमादिति, तदसत्, भ्रमस्य रजताविषयकत्वे असत्ख्यातिवादापत्तेः । तदविषयकत्वेऽपि तदाकारतास्वीकारात् अदोष इति चेत्, न, विषयतातिरिक्तायामाकारताया मानाभावात् । ननु आकारता विषयता यतो यत्सन्निकृष्टेन करणेन यज्ज्ञानं जन्यते तस्य तज्ज्ञानजनककरणसन्निकर्षाश्रयत्वं पर्यवसितं विषयता, सा च नासतो रजतस्य, आकारता च तन्नावश्योपेया, इदं रजतममिव असदेव रजतमभात् इदं रजतं जानामीत्याद्यनुभवविरोधाय; तथा च भ्रमस्य न रजतविषयकत्वमिति चेत्, न, इदं द्रव्यं जानामि इदं रजतं जानामि इत्याद्यनुभवानां भानभास्यमयत्ववैलक्षण्यस्यानुभवेनासत्पक्षत्वात् । आकारतायामपि विषयतात्वस्वीकारस्यैवोचितत्वात्, नित्यज्ञानीयविषयताया अतिरिक्ताया आवश्यकत्वेन तस्या एव तत्समानाकारेषु जन्यज्ञानेषु स्वीकारौचित्याच्च । किं च घटवद्भूतलं घटो रूपवान् भूतले घट इति समूहालम्बनात्मकज्ञानस्य घटे भूतलविशेषणकत्वापत्तिः, रूपांशे

घटस्य विशेष्यत्वानुरोधेन तज्ज्ञानजनकघटेन्द्रियसन्निकर्षस्य विशेष्यतारूपताया भूतलस्य घटांशे विशेषणत्वानुरोधेन भूतलेन्द्रियसन्निकर्षस्य प्रकारतारूपतायाश्चावश्यस्वीकार्यत्वात्। न च प्रकारतात्वविशेष्यतात्वादीना विषयतात्वव्याप्यतया भूतलनिष्ठविषयताया विशेष्यतात्वेनैव घटादिविषयतानिरूपकत्वं न तु प्रकारतात्वेनेति वाच्यम्, भूतलं घटवत् भूतले घट इति समूहालम्बनादिप्रतीत्यनुरोधेन तस्याप्यवश्याभ्युपेयत्वात्। न च तत्र सन्निकर्षभेदात् नानुपपत्ति, एकेनैव सन्निकर्षेणोक्तविधज्ञानद्वयजननस्थले गत्यभावात्, संयोगान्यसन्निकर्षे नितरामनुपपत्तेश्च। किं च प्रकारतानिरूपकत्वादेरतिरिक्तत्वे विषयतैवातिरिक्तास्तु अनतिरिक्तत्वे चोक्तो दोष इति अन्यत्र विस्तर। एवं चातिरिक्तविषयताकल्पनस्यावश्यकत्वे ज्ञानजनकसन्निकर्षस्य विषयतात्वकल्पनमनुचितम्। तथा च भ्रमस्यारोप्यविषयकत्वध्रौव्यात् अपरोक्षभ्रमस्यारोप्येन्द्रियसन्निकर्षजन्यत्वं भवश्यवाच्यमिति शुक्तिरजतादेर्नात्यन्तासत्त्वं शक्यमभ्युपगन्तुम्। अत्यन्तासत्प्रतियोगिक इन्द्रियसंयोगो भ्रमेष्टस्तेन चात्यन्तासतोऽपरोक्षत्वमुपपद्यते इति कस्यचिदुक्तिस्तु न श्रद्धेया, संयोगप्रतियोगिताया असत्त्वाव्याघातकत्वं तदनुयोगिताया

अपि तथात्वापत्तेः एतन्मतं परैरेव दूषितमिति नात्र निर्भरः क्रियते । इन्द्रियमनिकर्षादिव दोषादपि कस्यचिल्लौकिकप्रत्यक्षं जायते इति दुराशा तु अग्रे निराकरिष्यते । एवं च शुक्तिरूप्यादावनिर्वाच्यत्वोपगते तद्दृष्टान्तेन भेदेऽपि अनिर्वाच्यत्वादिविकल्पमाश्रित्य सिद्धसाधनाद्युद्भावनसंभवात् न च भेदे विकल्पो युज्यते इति परोक्तेनावकाश । एवमुक्तानुकूलतर्कमधिवानि अनुमानान्तराणि अस्यानिर्वाच्यतापसिद्धिमापादयन्ति— सत्त्वासत्त्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी, धर्मत्वात् , रूपरसवत् , सत्त्वमसत्त्वाभाववन्निष्ठाभावप्रतियोगि, सन्मात्रवृत्तित्वात् , आत्मत्ववत् , असत्त्व सत्त्वाभाववन्निष्ठाभावप्रतियोगि, सद्वृत्तित्वात् , तदाधारतावत् , इत्यादीनि ॥

ननु प्रथमो हेतुरभिधेयत्वज्ञेयत्वादौ व्यभिचारी, तस्यापि पक्षतुल्यत्वे व्याघात , अभिधेयत्व किंचिन्निष्ठाभावप्रतियोगीति साधने धर्मात्यन्ताभावाधिकरणत्वेन व्यभिचार , तस्यापि पक्षत्वे सकलधर्मवत्त्व कस्यचिद्विरुद्धमापद्येत, परस्परविरुद्धत्वं चोपाधि , न च सत्त्वासत्त्वे अपि न विरुद्धे, अनिर्वचनीयार्थप्रतीतेः प्रागविरोधाप्रतीतेः, व्याहतिश्च उक्तसर्वानुमानसाधारणं दूषणमिति चेत्— अत्राहु — प्रथम-

हेतौ धर्मशब्देन परस्परविरहाव्यापकत्वस्य विवक्षिततया प्रमेयत्वादौ व्यभिचारानवकाशात् । एतेन घटत्वाघटत्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी, धर्मत्वादित्याद्याभाससाम्यमपि प्रत्युक्तम् । नन्वाद्यमनुमानमयुक्तम्, सत्त्वासत्त्वयोर्द्वयोरपि किंचिन्निष्ठाभावप्रतियोगिताया पराभिमतत्वात्, न च धर्मिनिष्ठेत्यनेन धर्मिणि एकत्वोपादानात् नाय दोष इति शङ्क्यम्, यत एकत्व न सख्याविशेष नापि भेदप्रतियोगिकाभाव तादात्म्य वा, अव्यावर्तकत्वात्, न चैकपरस्परात्यन्ताभावसमानाधिकरणत्वस्य विवक्षितत्वाददोष, अनुगतानतिप्रसक्तस्य परस्परत्वस्य दुर्वचत्वात् । एवं च सत्त्वमसत्त्वाभावनिष्ठात्यन्ताभावप्रतियोगि तद्विरहाव्यापकत्वात् इत्यादिरीत्यैवार्थो वर्णनीय । तथा च हेतो साध्याविशेष इति चेत्, उच्यते— सत्त्वासत्त्वे इत्यनेन सत्त्वासत्त्वाभयत्वमुद्देश्यतया विवक्षितम् साध्यमपि स्वसमानाधिकरणत्वस्वावच्छिन्नाभावसमानाधिकरणाभावप्रतियोगितावच्छेदकधर्मसमानाधिकरणत्वोभयसबन्धेन किंचिद्धर्मविशिष्टत्वरूपम्, हतुरपि स्वसमानाधिकरणत्वस्वावच्छिन्नाभाव०यापकतावच्छेदकोभयावृत्तिधर्मसमानाधिकरणत्वोभयसबन्धेन किंचिद्धर्मविशिष्टान्यत्वम्, रूपरसोभयत्व च दृष्टान्त

इति न कोऽपि दोषः । नापि व्याहतिः, सा हि सत्त्वासत्त्वयोः परस्परविरहरूपतया परस्परविरहव्यापकतया परस्परविरहव्याप्यतया वा, नाद्यद्वितीयौ, स्वप्रकारकधीविशेष्यतात्यन्ताभावप्रतियोगित्वाभावरूपसत्त्वात्यन्ताभावस्य सत्त्वप्रकारकधीविशेष्यत्वात्यन्ताभावादिरूपासत्त्वात्यन्ताभावस्य च शुक्तिरूप्यादावेकस्मिन्धर्मिणि सत्त्वात्, न तृतीयः, तस्या व्याघाताप्रयोजकत्वात् ॥

नन्वसत्प्रतीतौ सत्त्वेनापि तत्प्रतीतिर्निरपवादेति निरुक्तमसत्त्वमव्यापकमिति चेत्, अत्रेदं वक्तव्यम्— केयमसत्सत्त्वावगाहिनी प्रतीतिः, शशविषाणं सदित्याकारिका सेति चेत्, न, उक्तप्रतीत्या शशीयत्वेन भासमाने शृङ्गे सत्त्वस्य विषयीकरणात्, शशविषाणशब्देन विषाणादिपदार्थतावच्छेदकानवलीढस्यासतः प्रत्यायनायोगाच्च, विशिष्टमतिरिक्तमेव तादृशप्रतीतौ विषय इति चेत्, न, तस्य शशीयत्वविषाणत्वादिना अभाने विषाणं शशीयत्वादिना जानामीत्याद्यनुभवविलोपापत्तः । तेन रूपेण विशिष्टं भासते इत्युक्तौ चानिर्वाच्यशशीयत्वादिना शृङ्गमेवानलीकं भासतां किमसद्भानकल्पनेन। नन्वेवं शशविषाणमसदित्यादिप्रत्ययोऽपि न प्रमाणं स्यात्, विषाणे शशीयत्वादिना

भासमानेऽप्यलीकत्वायोगादिति चेन्; विषाणत्वगवीयत्वा-
दिशून्यमलीकं विषाणत्वेनावगाहमानस्योक्तप्रत्ययस्य कथ-
मपि प्रामाण्यायोगात्। यदि च तत्प्रामाण्यायापदार्थस्या-
प्यसतो भानमुपेयते तत्र च विषाणत्वादि न भासते
इत्युच्यते तदापि शशविषाणम्...। यदा च परोक्षे नानि-
र्वान्यख्यातिरिति मतं तदान्यथाख्यातिरस्तु। शशविषाणं सत्
गोविषाणं सत् इत्यनयोः प्रत्यययोरवैलक्षण्यस्य तावकैरुद्घो-
षणाच्च। तुच्छं सत् असत् सदिति च न प्रतीतिः, आहार्या
सापि संभवतीति चेत्, न, आहार्यवृत्तेर्ज्ञानत्वे मानाभावात्।
सत्त्वप्रकारकानाहार्यप्रतीत्यविषयत्वं वा असत्त्वमस्तु। अथ
सत्त्वप्रकारकप्रतीत्यविषय. सन्निति प्रतीतिमादायैव असतः
सत्वेन प्रतीतिरनाहार्या संभवतीति चेन्न, तत्रापि सत्त्वप्रती-
तिविषयत्वाभावेन प्रातिभासिकेनावलीढोऽसद्विलक्षण एव
प्रतीयते इति उपगमात्। तत्रासदेव सति तादृशप्रतीत्यवि-
षयत्वमभावादिति प्रत्ययस्य त्वयापि अङ्गीकर्तव्यत्वात्।
सत्त्वप्रकारकप्रतीतिविषये तत्र तदविषयत्वस्य बाधात्। न-
न्वेवमपि विषयः सन्निति प्रतीतौ अलीकस्यापि विषयस्य
भानसंभवात् नेदमखिलालीकव्यापकमिति चेन्न, विषयत्व-
सामानाधिकरण्येन सत्त्वभानात्; तादृशबुद्धावलीकस्य वि-

पयत्वे मानाभावात्, प्रामाण्यस्य स्वतस्त्वात्, सर्वे विषया सन्त इति प्रतीतावपि न सर्वेषां विषयाणामलीकसाधारणाना मानम्, सत्त्वप्रकारकप्रतीत्यविषयस्यापि कस्यचिद्लीकस्य सभावितत्वेन तत्र सत्त्वप्रकारकप्रतीतिविषयत्वाङ्गीकारे व्याघातात्, न हि सत्त्वप्रकारकप्रतीत्यविषय प्रामाणिक इति तवानुमतम्। ननु कालासबन्धी सन्निति प्रत्यय एवासत सत्त्वावगाही सुलभ इति चेन्न, उक्तरीत्यासद्विलक्षण एव वस्तुनि कालासबन्धित्वस्य अभाव एव वा कालसबन्धिनिष्ठ कालसबन्धत्वप्रतियोगिकत्वादे कल्पनिकस्य भानसभवेन अलीकस्य तादृशप्रतीतिविषयत्वकल्पनाया मानाभावात्। अविषय सन्निसादावुक्तरीते तवास्यावश्यकत्वात्। न हि अविषयस्य विषयता न व्याहता। नन्वेवमसत्तुच्छादिशब्देष्वप्येवमुक्तिसभवेन असत प्रतीतिविषयत्वमेव कुतोऽङ्गीकार्यमिति चेत्, नाङ्गीकार्यमेव, बल वत्प्रमाण नोपलभ्यते। न हि सिद्धान्ते असत्ख्यातिरुपेयेति निर्बन्धोऽस्ति। तर्हि मिथ्यात्वशरीरेऽसद्विलक्षणत्व कुतो निवेश्यत इति चेत्, परीत्या असत्त्वमादायार्थान्तरादिवारणायेति निपुणतरमुपपादितमाकरेषु। तथा च बाधेन सद्विलक्षणताया प्रत्यक्षविषयत्वरूपत्वाया निस्स्वरूपत्वसत्त्वप्रकार

कप्रतीत्यविषयत्वरूपासद्वैलक्षण्यस्य च शुक्तिरजतादौ सिद्धे अप्रत्यूहतयोक्तानुमाने सामान्यतो निर्वाच्यतासिद्धिसंभवाश्च सर्वमनाकुलम् ॥

ननु बाधेन सद्विलक्षणत्वं कथं सिध्यति, यतो बाधो यद्यत्यन्ताभावप्रतियोगितामात्रम्, तत् परमार्थतया पराभ्युपगतघटादिसाधारण्याच्छङ्कितव्यभिचारतयाप्यसाधकम्, अथ स्वसमानाधिकरणव्याप्यवृत्त्यत्यन्ताभावप्रतियोगित्वादिकं तत् तदा हेतुसाध्ययोरविशेषः, हेतुसिद्धिमात्रेण कृतकृत्यता च दृष्टान्तदौर्घट्यं चेति चेन्, उच्यते— इदं रजतमित्यादौ प्रतीतं तावदन्यत्र सत्, मानाभावात्, अधिकरणान्तरासंसृष्टत्वे सति एतदधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वेन हेतुना सुसाधनम् स्वप्रकारकधीविशेष्यताव्यापकात्यन्ताभावप्रतियोगित्वम्, न चान्वयदृष्टान्तदौर्लभ्यान्नास्य साधकतेति शङ्कनीयम्, तदभावेऽपि व्यतिरेकिदृष्टान्तसौलभ्यात् । अत एवोक्तं सम्प्रदायविद्भिरिति परैणैवाभिधानात्— अर्थापत्त्या शुक्तिरजतादेरनिर्वाच्यतासिद्धिरिति । यद्यप्युक्तरीत्यान्वयिनाप्यसद्विलक्षणत्वं सिध्यति । तथाप्यनिर्वाच्यताघटकसद्विलक्षणत्वस्य व्यतिरेकिणैव सिद्धेः साम्यतया इतरांशस्यापि तेनैव साधनं युक्तमिति अभिप्रायः । अत्र च

सत्त्वप्रकारकप्रतीत्यविषयस्य अलीकविशेषस्य प्रत्यक्षाविषयत्व परानुमतमिति न व्यतिरेकिदृष्टान्तदौर्घट्यम् ॥

एव निरर्थलीकाया सिद्धान्तपद्धतौ यत्परेणोक्तम्--- अथापि स्यादर्थापत्त्या शुक्तिरजतादे अनिर्वाच्यता सेत्स्यति, तथाहि--- यदत्यन्तासत् तत्प्रतीयते यथा नरविषाणम्, यच्चात्यन्तसत् न तत् बाध्यते यथा आत्मा, तदिहोभयान्यथानुपपत्त्या अनिर्वाच्यतैवाश्रयितु युक्तेति चेत्, न, अर्थापत्तेरपि अनुमानविशेषतया विशेषणाप्रसिद्धौ तदनुत्थानात्, तदेतदुक्त न चार्थापत्त्या अनिर्वाच्यत्वसिद्धिरिति, किं चात्यन्तासतो नरविषाणादेरपि तत्पदात्प्रतीतिसभवेन असत्त्व प्रतीयत इति व्याप्तेरसिद्धया शुक्तिरजतादेरपि अत्यन्तासत्त्वेऽप्युपपत्ते, तथा अन्यथाविदितस्य सम्यग्विज्ञानगोचरत्व रूपबाध्यत्वस्य सत चिदात्मनोऽपि सभवेन नार्थापत्त्या अनिर्वाच्यत्वसिद्धि, किंचासतो ज्ञानेऽसद्वैलक्षण्यज्ञानानुपपत्ति, तदप्युक्तम्--- असत प्रतीति विना असद्वैलक्षण्यज्ञानानुपपत्तिरिति, तदेतदलग्नकमिति स्पष्टमेव ॥

यत्तु यद्यत्यन्तासतो नापरोक्षता तर्हि प्रातिभासिकशुक्तिरजतादेर्यत्प्रातिभासिकत्वैलक्षण्य तदपरोक्षज्ञान भ्रान्तस्य न स्यात्, तथा चाप्रवृत्ति प्रसज्येत, निर्निबन्धनश्चायमसतो

ऽपरोक्षज्ञानगोचरत्वानङ्गीकारे, किंचिज्ज्ञानस्यानालम्बनत्वे अन्यत्राप्यनाश्वासप्रसङ्ग इति चेत्, तत्किं परोक्षप्रतीतेरसद्विषयकत्वेनानाश्वासप्रसङ्गः? समानश्चायं प्रसङ्गः प्रातिभासिकप्रत्ययाङ्गीकारेऽपि, बाधाद्विवेक इति चेत्, समानं प्रकृतेऽपि, न च वयं शून्यवादिन इव रजतज्ञानं निरालम्बनं ब्रूमः, शुक्तिविषयकत्वाङ्गीकारात्, केवलं स्वविषयं शुक्तिकाशकलं अत्यन्तासद्रजतात्मना विषयीक्रियत इति असद्विषयमुच्यत इति, तदतिमन्दम्, प्रातिभासिके प्रतीतस्य प्रातिभासिकवैलक्षण्यस्याप्यस्मन्मतेऽत्यन्तासत्त्वानङ्गीकारात्, वस्तुतः प्रातिभासिकविलक्षणत्वमपि नाध्यक्षगोचरं, प्रातिभासिकत्वस्यातीन्द्रियवस्तुघटितत्वेन चक्षुराद्यग्राह्यत्वात्। न च प्रातिभासिकवैलक्षण्याज्ञाने प्रवृत्तेरनुपपत्तिः, तज्ज्ञानस्य प्रवर्तकत्वानुपगमात्। न चैवं प्रातिभासिकत्वेन ज्ञातेऽपि प्रवृत्त्यापत्तिः, तदा फलानुपधायकत्वनिश्चयादेव तदापत्त्यसम्भवात्। न च पारमार्थिकत्वेन त्वदभिमते स्वाप्नवासनामयवह्नौ मशकनिवर्तकधूमार्थी कश्चनापि प्रवर्तते, तस्य वासनामयत्वेनान्तरत्वात् अनुपादेयत्वनिश्चयात् न प्रवर्तत इति चेत्, अस्यापि तूलाविद्याकार्यस्यानुपादेयत्वनिश्चयादेव तत्र न प्रवर्तत इति तुल्यम्।

असतोऽपरोक्षत्वानङ्गीकारः किंनिबन्धन इति तु दत्तोत्तरम् ॥

नन्वसत इन्द्रियसंनिकर्षाभावेऽपि दोषवशादेवापरोक्षता-
स्त्विति चेत्, न, रजतप्रत्यक्षत्वमपेक्ष्य रजतत्वस्यैव दोषकार्य-
तावच्छेदकत्वे लाघवात् । कार्यतावच्छेदके रजतत्वादिकमनि-
वेश्य असत्प्रत्यक्षत्वमात्रं कार्यतावच्छेदकमुच्यत इति चेत्, न,
दोषस्वरूपस्यानुगतानतिप्रसक्तस्यैकस्याभावेन विशिष्यैव कार्यका-
रणभावस्य वाच्यतया व्यतिरेकव्यभिचारप्रसङ्गात् । दो-
षाणां केनचिद्रूपेणानुगतानां कारणत्वेऽपि केनचिद्रूपेण
रङ्गभ्रमजनकाद्दोषाद्रजतभ्रमापत्तेः । रजतसद्ध्यक्षत्वादेरपि
न दोषकार्यतावच्छेदकत्वसंभवः, परमार्थरजततत्प्रत्यक्षा-
दिसाधारण्यात्, एवं च दोषकार्यतावच्छेदकमव्यवहि-
तोत्तरत्वसंबन्धेन दोषवैशिष्ट्यमेव वाच्यम्, ततश्च रजत-
त्वादेः कार्यतावच्छेदककोटौ निवेशे प्रयोजनाभावात् नोक्त-
लाघवावकाश इति चेत्, न; एवमपि दोषाद्रजतमुत्पद्यते,
तज्ज्ञानं वेत्यत्र विनिगमकाभावेन रजतोत्पत्तेरवर्जनीयत्वात् ।
न च रजतोत्पत्तिवादिनापि रजतज्ञानमवश्योपेयम्, अन्यथा
रजतं साक्षात्करोमि इत्यादिप्रत्ययानुपपत्तिः, एवं च रजतो-
त्पत्तिर्गौरवान्नोपेयेति वाच्यम्, रजतोत्पत्तिवादिना रजतप्र-
त्यक्षोत्पत्तेरनुपगमात्; साक्षिवेद्यं हि तत् । अथैवमपि रजतं

ऽपरोक्षज्ञानगोचरतानङ्गीकारे, किंचिज्ज्ञानस्यानालम्बनत्वे अन्यथाख्यात्याश्रयप्रसङ्ग इति चेत्, तत्किं परोक्षप्रतीते रसाद्विषयकत्वेनानाश्रयप्रसङ्ग ? समानश्चायं प्रसङ्गः प्राति भासिकप्रत्ययाङ्गीकारेऽपि, यथाद्विवेक इति चेत्, समान प्रकृतेऽपि, न च वयं शून्यवादिन इव रजतज्ञानं निरालम्बनं ब्रूमः, शुक्तिविषयकत्वाङ्गीकारात्, केवलं स्वविषयं शुक्तिकाशकलं अन्यत्वामग्रजतात्मना विषयी-क्रियत इति अस्मद्विषयमुच्यत इति, तदतिमन्दम्, प्रातिभासिक प्रतीतस्य प्रातिभासिकवैलक्षण्यस्याप्यस्म-न्मतेऽत्यन्तासत्त्वानङ्गीकारात्, वस्तुतः प्रातिभासिकविलक्षण त्वमपि नाध्यक्षगोचरं, प्रातिभासिकत्वस्यातीन्द्रियवस्तुघ टितत्वेन चक्षुराद्ययोग्यत्वात् । न च प्रातिभासिकवैलक्षण्या-ज्ञाने प्रवृत्त्यनुपपत्तिः, तज्ज्ञानस्य प्रवर्तकत्वानुपगमात् । न चैव प्रातिभासिकत्वेन ज्ञातेऽपि प्रवृत्त्यापत्तिः, तदा फलानुप धायकत्वनिश्चयादेव तदाप्रवृत्त्यसंभवात् । न च पारमार्थिक त्वेन त्वदभिमते स्वाप्नवामनामयवह्नौ मशकनिवर्तकधूमार्थी कश्चनापि प्रवर्तते, तस्य वामनामयत्वेनान्तरत्वात् अनुपादे-यत्वनिश्चयात् न प्रवर्तत इति चेत्, अस्यापि पल्लवाविद्या कार्यस्यानुपादेयत्वनिश्चयादेव तत्र न प्रवर्तते इति तुल्यम् ।

असतोऽपरोक्षत्वानङ्गीकारः किंनिबन्धन इति तु दत्तोत्तरम् ॥

नन्वसत इन्द्रियसंनिकर्षाभावेऽपि दोषवशादेवापरोक्षतास्त्विति चेत्, न, रजतप्रत्यक्षत्वमपेक्ष्य रजतत्वस्यैव दोषकार्यतावच्छेदकत्वे लाघवात् । कार्यतावच्छेदके रजतत्वादिकमनिवेश्य असत्प्रत्यक्षत्वमात्रं कार्यतावच्छेदकमुच्यत इति चेत्, न, दोषत्वस्यानुगतानतिप्रसक्तस्यैकस्याभावेन विशिष्यैव कार्यकारणभावस्य वाच्यतया व्यतिरेकव्यभिचारप्रसङ्गात् । दोषाणां केनचिद्रूपेणानुगतानां कारणत्वेऽपि केनचिद्रूपेण रङ्गभ्रमजनकाद्दोषाद्रजतभ्रमापत्तिः । रजतत्वप्रत्यक्षत्वादेरपि न दोषकार्यतावच्छेदकत्वसंभवः, परमार्थरजतप्रत्यक्षादिसाधारण्यात्, एवं च दोषकार्यतावच्छेदकमव्यवहितोत्तरत्वसंबन्धेन दोषवैशिष्ट्यमेव वाच्यम्, ततश्च रजतत्वादेः कार्यतावच्छेदककोटौ निवेशे प्रयोजनाभावात् नोक्तलाघवावकाश इति चेत्, न; एवमपि दोषाद्रजतमुत्पद्यते, तद्ज्ञानं चेत्यत्र विनिगमकाभावेन रजतोत्पत्तेरवर्जनीयत्वात् । न च रजतोत्पत्तिवादिनापि रजतज्ञानमवश्योपेयम्, अन्यथा रजतं साक्षात्करोमि इत्यादिप्रत्ययानुपपत्तिः, एवं च रजतोत्पत्तिर्गौरवान्नोपेयेति वाच्यम्, रजतोत्पत्तिवादिना रजतप्रत्यक्षोत्पत्तेरनुपगमात्; साक्षिवेद्यं हि तत् । अथैवमपि रजतं

ननु वाष्पारोपितधूमेऽपि धूमत्वोपगमे धूमेन वह्निसाधने धूमस्याभासताप्रसङ्ग इति चेत्, न; आभासविविक्तधूमस्यैव हेतुत्वोपगमेन तत्राभासतायाः अनवकाशात् । यत्तु एतद्विशेषणं निर्धर्मत्वसिद्धेऽप्यनुमानेनाप्रकाशस्य सिद्धमपि भ्रान्तमेवापूर्ववत् यद्यपि ब्रह्माधिकरणत्वेनोपगतस्य न सदधिकरणत्वसंभवः, संभवे वा ब्रह्मणोऽप्युक्तरीत्या सदसद्विलक्षणत्वापत्तिः, असत्त्वप्रसक्त्या तन्निषेधो व्यर्थः; किं च 'मूर्तं सदिति अमीर्तं अमूर्तमसदुच्यते' इति 'यदन्यद्वायोश्चान्तरिक्षाच्चैतत्सत् वायुश्चान्तरिक्षं चासत्' इति आगमप्रसिद्धसदसन्निषेधपरता च श्रुतेः स्युक्तौ लोकप्रसिद्धितो वैदिकप्रसिद्धेरन्तरङ्गत्वात्, तथा च नानया श्रुत्या सदसद्विलक्षणत्वसिद्धिः संभवति; तथापि केवलवेदप्रसिद्धितो लोकवेदोभयप्रसिद्धेरतीवान्तरङ्गतया सदसच्छब्दाभ्यां परमार्थतुच्छग्रहणम् तावदुचितम् । 'सत्यं ज्ञानमनन्तम्' 'अविनाशी वा अरेऽयमात्मा' 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुत्यनुरोधेनाप्यात्मा श्रुतेर्व्याख्येयतया 'नोऽसदासीत्' इत्यत्र आत्मान्यत्वेनेति पूरणीयम्, असतः सत्त्वप्रसक्तावपि सद्वैलक्षण्यमात्रोक्तौ तुच्छस्येव सद्विलक्षणस्य तमसोऽपि नाप्रकाशत्वादिकमुपपन्नमिति शङ्काम्युदासाय

सद्विलक्षणत्वेऽपि तमसो न तुच्छत्वमिति ज्ञापनायासतोऽपि च निषेधः । तदापि च वाय्वन्तरिक्षभिन्नस्यैव सच्छब्दार्थतया तद्भिन्नस्य तमसो ब्रह्मणश्च सत्त्वेन सामान्यतः सम्भारतीति निषेधायोगेन ब्रह्मान्यत्वेनेत्यध्याहारस्यावश्यकत्वात् । न च 'मूर्तं सत्' इति 'यदन्यद्वायोश्चान्तरिक्षाच्च तत्सत्' इति श्रुतिद्वयैकवाक्यतया वाय्वन्तरिक्षभिन्नं मूर्तमेव सच्छब्दार्थ इति वाच्यम्, एवमपि अणीयसाम् 'अणोरणीयान्' इति श्रुतिप्रसिद्धाना भागवतरूपाणाम् अव्यावृत्तेः, एवमप्यणीयसां प्रकृत्यव्याकृताकाशांशजीवानामपि प्रलये सत्त्वादुक्तार्थो न यथाश्रुतः । न च 'मूर्तामूर्तं सरत् ब्रह्म' इति वैदिकश्रुतिबलात् मूर्तपदं पृथिव्यप्तेजोमात्रपरमिति युक्तम्, मद्रीत्या मूर्तविलक्षणत्वमात्रेण तादृशश्रुत्युपपत्तौ मूर्तसच्छब्दस्य लोकवेदप्रसिद्धार्थोल्लङ्घनेन वृत्तिकल्पनाया अयोगात् । एवं प्रलये व्याकृताकाशस्य तदानीं निषेधश्च ते प्रतिकूलः, गुणत्रयात्मकत्वात् तमसो रजोनिषेधश्चासङ्गतः । प्रकारान्तरानुसरणे चाध्याहारगौरवम्, अम्भःप्रभृतिनिषेधश्च पुनरुक्तः । रजस इव सत्त्वस्यापि उद्रेकाभावात् तदनुक्त्या न्यूनता च, उपलक्षणता त्वगतिकगतिः, मन्मते तु रजःशब्देन पृथिव्याः भूताकाशस्य वायोरम्भसश्च कण्ठरवेणाहोरात्रनिषेधेनार्थतः तेजसश्च निषेधो लभ्यते ।

न चाविद्यायाः पारमार्थिकत्वे किंचिन्मानम् ॥

यत्तु सदसच्छब्दयोर्भावाभावपरत्वे सर्वस्य तदन्तर्भावात् पुना रजःप्रभृतेर्निषेधोऽनर्थकः स्यादिति, तदसत्; अत्रत्य-सदसच्छब्दयोर्लोकवेदप्रसिद्धयनुरोधेन परमार्थतुच्छपरतया तन्निषेधेऽपि रजआदिनिषेधस्यासिद्धेः; 'तदानीम्' इत्यस्य वैयर्थ्यं तु न शक्यशङ्कम्, सदसन्निषेधे तदन्वयः रजआ-दिनिषेधे तदन्वयस्यार्थवत्ता, एककाले एव तदुभयनिषेधं विना अनिर्वचनीयत्वालाभात्; 'नासदासीत्' इत्यत्रापि तदानीमित्यस्यावश्यकत्वाच्च । एवं च 'न सती नासती माया माया नैवोभयात्मिका । अनिर्वाच्या' इति बृहन्नारदीये, 'न सदेतन्नृपोच्यते' इति महुलनावैष्णवे, 'यदाविरासीदनृ-तस्य सर्वम्' इति आह्वरीयश्रुतौ, 'अनृतेन हि प्रत्यूढा' इति छान्दोग्ये, एवमन्यत्रापि श्रुतिस्मृतीतिहासपुराणेषु जगति असदन्यता, अनिर्वाच्यादिपदप्रयोगाच्चानिर्वाच्यत्वप्रसिद्धिः ॥

यत्तु 'अद्भुतत्वादनिर्वाच्यं ब्रह्म चिच्चैत्यमेव च । अचिन्त्यं तत एवैतदतर्क्यांज्ञेयमेव च । ऋगताविति धा-तोस्तु पूर्वावगतवत्सदा । स्थिते ब्रह्मर्तमित्युक्तमनृतं परिणा-मतः । प्रकृतिप्राकृतं प्रोक्तमसत्तद्ब्रुभत्वतः । असतां बुद्धिगम्यत्वादसत्यमिति चोच्यते । नियमेन बहिश्चित्तास्ते

सन्तो ब्रह्मणि स्थिताः। विश्वं सत्यं वशे विष्णोर्नित्यमेव प्रवाहतः। न कदाप्यनीदृशं विश्वं तत्तत्कालानुसारतः। असत्यमप्रतिष्ठं ये जगदाहुरनीश्वरम्। त आसुराः स्वयं नष्टाः जगतः क्षयकारिणः' इति व्याससरणात्, नोक्तपदानां स्वदुक्तानिर्वाच्यत्वादिपरतेति, तदसत्; ईदृशपदानां प्रसिद्धव्यासस्मृतौ अनुपलम्भात्। किं चैषां आगमतया न प्रामाण्यम्, न्यायोपबृंहितोपलभ्यमानश्रुतिसन्मूलकस्मृतिविरुद्धत्वात्, 'विरोधे त्वनपेक्षम्' इति न्यायात्, 'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्' इति परमर्षिणैवोक्तेश्च। सन्ति च जगतः स्पष्टं अनिर्वाच्यताबोधकस्मृतयः— सूतसंहितायां वासिष्ठादावन्यत्र च। किं च बृहदारण्यके यावदनिर्वाच्यपदस्य नाद्भुतपरत्वम्, 'न सती' इत्यादिना सद्वैलक्षण्याद्युपपादनवैयर्थ्यप्रसङ्गात्। न च तत्रासत्त्वमनुभवमनन्यबुद्धिगम्यत्वं वोच्यमानमद्भुतत्वोपपादकम्। एवं श्रीवैष्णवेऽपि 'ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च। नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य' इति सदसदात्मकस्य प्रपञ्चस्य 'स एव' इति साधारणेन तच्छब्देन विष्णुव्यतिरेकेणासत्त्वमुच्यते। 'ज्ञानस्वरूपो भगवान्य-

तोऽसावशेषमूर्तिर्न तु वस्तुभूतः । ततो हि शैलाब्धिधरादिभेदाञ्जानीहि विज्ञानविजृम्भितानि' इति । यदस्ति पारमार्थिकं यन्नास्ति परमार्थविलक्षणम् । यद्वा यदिदानीमस्ति यन्नासीदानीमतीतादि यतोऽसौ ज्ञानस्वरूपी वस्तुभूतश्च ततो हेतोरशेषमूर्तिरशेषपरिणामो न भवति तस्माच्छैलाब्धिधरादिभेदान् विज्ञानस्य मनसो विजृम्भितान् जानीहि । यथा स्वप्ना मानसवासनाविजृम्भितास्तथा जानीहीत्यर्थः । अत एव वक्ष्यति 'असत्संकल्प नामयम्' इति । यत्तु सर्वं समाप्नोपि ततोऽसि विद्यामलं भवति यद्वा सर्वं इत्यनुसारात् ज्योतिरादिपदानि तद्व्यापकपराणि, द्वितीयश्लोके च विज्ञानविजृम्भितानीत्यस्य सर्वेत्यद्यानुसारात् विष्ण्वीक्षणविलसितानीत्यर्थः । अतो न जगतो ब्रह्मव्यतिरेकेणासत्त्वपरतैतद्वचनस्येति, तदसत्, सर्वं समाप्नोपि तादात्म्येन व्याप्नोषीत्यर्थसंभवेन कथंचित्सर्वशब्दस्य तत्र विष्णुबोधकतया उपपादकत्वेऽपि अकृतज्योतिरादिपदाना तद्व्यापके लक्षणाकल्पनस्यानुचितत्वात् । परमात्मजगतोर्भेदेऽपि तत्र भगवदीक्षणजनितत्वानुपपादकतया तत इत्यनेन पूर्वाभिहितार्थस्य वक्ष्यमाणार्थे हेतुत्वेनोपन्यासस्य सदर्भविरुद्धत्वाच्च, मृदभिन्नस्यापि घटादे मृदि सत्त्वदर्शनाच्च । उक्तार्थदाढ्याय तस्य ज्ञानैकनिवर्त्यतामाह— 'यदा तु सिद्ध

सर्वकामावाप्तिं वा अपेक्षते । एकवाक्यत्वसंभवे वाक्यभेदकल्पना चाधिका । एवं विष्णुरेवैकः सत्यः तत्र च सर्वं जगदध्यस्तमिति चोरः स्थाणुरित्यादिवत् ज्योतींषि विष्णुरित्याग्निर्देश — इत्युपदिष्टम्, तत्रासंभावनानिरासाय युक्तिमप्याश्पर्ययति— 'वस्त्वस्तु किं कुत्रचिदादि मध्यपर्यन्तहीनं सततैकरूपम् । विज्ञानमेकं निजकर्मभेदाद्विभिन्नचित्तैर्बहुधा व्युपेतम् । यथाऽन्यथात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम् । महाघटस्त्वं घटतः कपाले कपालिकाचूर्णरजस्ततोऽणु । जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र तत्त्वम् । तस्मान्न विज्ञानमृतेऽस्ति किंचित् क्वचित् कदाचित् द्विज वस्तुभूतम्' इति । आदिमध्यपर्यन्तहीनं सततैकरूपं वस्तु कुत्रचित् दृश्यवर्गे अस्ति किम्, किमिति आक्षेपः, अविद्यादिदृश्यस्य नश्वरत्वात् । वियदादीनां न किंचिदपीदृशं दृश्यमस्तीत्यर्थः । ततः किमत आह— यदन्यथात्वं प्राक्सिद्धरूपाद्रूपान्तरं उत्पत्तिनाशाद्यवस्थान्तरं भूयो याति न तत् तथा, न तद्वस्तु पारमार्थिकमिति यावत् । एवं व्याप्तिमुपपाद्योपनयनिगमने दर्शयति— तत्र विकारिवर्गेऽर्थे तत्त्वं कुतोऽबाधितं वस्तु कुतः न कुतोऽपीत्यर्थः ।

यत्तु सततैकरूपं विज्ञानं वस्तुपदवाच्यं तद्विपरीतं जडमत-
त्पदवाच्यमिति अनेनोच्यते इति, तदसत्; एवं सततै-
करूपम् आदिमध्यान्तहीनं वस्तु तदन्यत् अवास्तवमिति अने-
नैव पूर्णतया क्वचिदपि जडवर्गे एतादृशं वस्त्वस्ति किमिति
तत्प्रतिक्षेपवैयर्थ्यात्, अव्याकृताकाशादेर्जडस्यापि सततैकरू-
पतायास्त्वदभिमतत्वेन जडमात्रस्य वस्तुत्वप्रतिक्षेपायोगाच्च ।
यदपि विशिष्टं प्रति विशेषणादेरुपादानतया व्याकृतादेरपि
क्वचिद्विशेषणत्वात् विशिष्टस्य विशेषपरिणामितास्तीत्युच्यते,
तदा जीवादेरपि अपरिणामिता दुरुपपादा, परिणामितयावगते
वस्तुपदप्रयोगाच्च । मम तु सन् घट इत्याद्यध्यक्षेण बाधानुप-
लम्भात् तत्र वस्तुपदप्रयोग उपपद्यते । तत्त्वविदामपि 'पश्वा-
दिभिश्चाविशेषात्' इति न्यायेन तदुपपत्तिः । अकस्मा-
देवात्र वस्तुपदवाच्यतदवाच्यव्यवस्थाकरणस्य संदर्भविरु-
द्धत्वाच्चेत्यादि दिक् । वक्ष्यमर्थं लोकशास्त्रादिविरुद्धानर्था-
नादाय दूषयति महाघटत्वमित्यादिना । या महाघटत्वं
मात्रभवित्रोरभेदात् घटः या कपालिका, ततः चूर्णरजः
अत्र तत इति अभिसमाकृष्यते, महीशब्देन पिण्डावस्था
पृथिव्युच्यते । स्वकर्मणा स्वीयेन कर्मज्ञानप्रतिबन्धकदु-
रितेनालक्ष्यते, अत्र किं सत्त्वमबाधितमस्ति गृहीत्यर्थः ।

यदि तव मृत्तिका सती घट सन्निखाद्यध्यक्षबलेन अर्थक्रियाकारित्वादियुक्त्या वा यदि जगत्सत्यत्वसाधनाभिलाषोऽस्ति तर्हि ब्रूहीति तन्निरास च श्रुतितर्काभ्या करिष्यामीति भाव , लोकेऽपि स्वपक्षसाधनपरेण पर प्रति यद्यस्ति विपरीतार्थसाधनशक्तिस्तर्हि ब्रूहीति व्यवहारदर्शनात् । उक्तार्थस्योपसंहारस्तस्मादिति । नन्विदमप्यविकारस्य जीवस्यापि श्रुतितर्कप्रमितत्वात् सर्व विष्णुरेवेति प्रतिज्ञा न घटते इत्याशङ्क्याह विज्ञानमेक निजकर्मभेदाद्विभिन्नचित्तैर्बहुधा व्युपेतम् इति। एक सजातीयद्वितीयशून्यम् एव अपि ज्ञान विभिन्नचित्तैरुपाधिभि निजकर्मभेदात् अन्त करणगताना कर्मणा कार्याणा भेदात् वैलक्षण्यात् बहुधा बहुभावेन व्युपेत ज्ञात भवति । तथा चान्त करणगतसुखादिवैचित्र्य तदुपाधिके आत्मन्यारोप्य तत्र बहुभावो ज्ञाप्यते । तथा चौपाधिके एवात्मनि गगनस्येव घटमणिकमल्लिकाद्युपाधिकृत इति नोक्तप्रतिज्ञाभङ्ग इति भाव ॥

यत्तु विज्ञानस्वरूपो जीवो देहादिभेद प्राप्नोतीति वस्तु पदवाच्यो न स्यादिति शङ्कानिरासाय विज्ञानमित्यादि तथा चानादिकर्मप्रवाहरूपाविद्याभिन्नचित्तैरभ्युपेत देवत्वादिक न तु स्वाभाविक इति भाव इति, तन्मन्दम्, तथा सति निज

कर्मभेदादित्यनेनैव सामञ्जस्ये विभिन्नाचिचैरित्यस्य वैयर्थ्यात्। किं च देवत्वादेः स्वाभाविकत्वाभावे ह्यागन्तुकतदात्मकविशेषावाप्त्या परिणामिता जीवस्य कथं वारिता। पूर्वरूपहानेन रूपान्तरप्राप्तिलक्षणः परिणामोऽपि तत्र दुर्वारः, मनुष्यत्वादिहानेन देवत्वादिप्राप्तेरुपगमात्। मनुष्यत्वादिकं चेतनेऽप्यस्तीति हि तवाग्रहः। एवं केवलस्य विशिष्टात्मना विपरिणामोऽपि तवेष्ट इति॥

ननु जीवस्याशुद्धत्वाविद्यामलिनत्वशोकलोभादिसङ्गित्वानेकत्वपरिणामित्वादिधर्मवतः कथमस्पृष्टदोषसंबन्धेन भगवता वासुदेवेन अभेदो युक्त इति आशङ्क्य निरस्यति— 'ज्ञानं विशुद्धममलं विशोमकशोकलोभादिनिरस्तसङ्गम्। एकं सदेकं परमं परेशः स वासुदेवो न यतोऽन्यदस्ति' इति। अत्र शुद्धमित्यारभ्य परममित्यन्तैर्विशेषणैः उक्तशङ्कानिरासः; ततश्चैवंभूतं जीवमनूद्य वासुदेवातिरिक्तं किमपि तत्त्वं नास्तीति प्रतिज्ञातार्थनिर्वाहाय तत्र परवासुदेवैक्यमखिलवेदसारभूतं शिष्यवत्सलो भगवान् पराशर उपदिशति— परेशः स वासुदेव इति। ननु विष्णोरव्यतिरिक्तं ज्योतिरादि सर्वमिति प्रतिज्ञाय तन्निर्वाहाय जीवे शुद्धसाक्षिणि श्रीपरवासुदेवप्रवचनस्य च फलमाह— यथैत-

दित्यादिना । एवं च मद्धाव एवं भवता मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् इति, स्पष्टमेव जगत्य मिथ्यात्वे प्रतिपाद्यमाने कथं पूर्वापरसंदर्भविरुद्धम् 'अन्यदसत्यम्' इत्यादिस्थलीयानामसत्यादीनां परोक्षार्थपरत्वं युज्यते । एवं तत्रैव ब्राह्मणरहोगणसंवादेऽपि प्रपञ्चमिथ्यात्वकथनपूर्वकमात्मैक्योपदेशो दृश्यते । तथा हि— रहूगणो नाम राजा परमार्थजिज्ञासया कपिलं परमर्षिं प्रति यियासुः मार्गे शिबिकावहनाय विष्टिगृहीतं जात्मवेषप्रतिच्छन्नम् अधिगतपरमार्थं ब्राह्मणमतत्त्वरितगामिनमवेक्ष्य पप्रच्छ 'किं श्रान्तोऽस्यल्पमध्वानं त्वयोढा शिबिका मम किमायासमहो न त्वं पीवानपि निरीक्ष्यसे' इति । ततश्च 'नाहं पीवा न चैवोढा भवतः शिबिका मया न श्रान्तोऽस्मि न चायासः सोढव्योऽस्ति महीपते' इति प्रत्युक्तः प्रत्यक्षविरोधादिदमनुपपन्नमिति ब्रुवाणः, न मया शिबिका त्वं वोह्यते, भूमिः पादौ वहति, पादौ जङ्घे वहतः, एवंक्रमेण स्कन्धः शिबिकां सा च राजसाक्षिकं देहं वहति । प्रणम्य वयमेव भूतैरूह्याम, भूतानि च गुणैः, ते च कर्मवश्याः, कर्म चाविद्याहेतुकम्, तच्च समस्तप्राणिसाधारणमिति रीत्या 'त्वयोढा शिबिका मम' इत्यादिकं दूषयित्वा, आत्मा नित्योऽक्षरः

शान्तो निर्गुण प्रकृते पर । प्रवृद्धचपचयो नास्य एकस्या-खिलजन्तुषु । यदा नोपचयस्तस्य नैवास्त्यपचयस्तदा । त्वया पीवानसीति त्वेकया युक्त्या त्वयेरितम्' इत्यभिधाय, 'श्रमश्च भारोद्वहने' इत्यादिकमपि न युक्तम्, देहादिभ्य करणे-भ्योऽतिरिक्तस्य भवाहकस्य असमायोगात् । यद्यवाहकत्वेऽपि वाहकसाश्रितामात्रेण श्रमस्तदा शिबिकास्थितस्य तवापि तत्साश्रितत्वात् श्रमो दुर्वार इति प्रत्युक्त, तादृशोक्त्या च अय जात्मस्वरूपप्रतिच्छन्नो महानेवात्मविदिति विदित्वा शि-बिकातोऽवतीर्य पादप्रणिपातपूर्वक प्रसाद्य 'कथ्यता को भवानत्र जात्मरूपधर स्थित । को भवान्यन्निमित्त वा यदागमनकारणम् । तत्सर्वं कथ्यता विद्वन् मह्य शुश्रूषवे त्वया' इति पप्रच्छ । ततश्च तदीयप्रश्नखण्डनामुखेनैव पर-मार्थोपदेशेन तमनुजिघृक्षु ब्राह्मण उवाच– 'श्रूयता सोऽह-मित्येतद्वक्तु भूप न शक्यते । उपभोगनिमित्त च सर्वत्राग मनक्रिया । सुखदु खोपभोगौ तु तौ देहाद्युपपादितौ ॥ धर्माधर्मोद्भवौ भोक्तु जन्तुर्देहादिमृच्छति । स तत्रैव हि भूपाल जन्तो सर्वस्य कारणम् ॥ धर्माधर्मौ यतस्तस्मा-त्कारणम् पृच्छ्यते कुत' इति । तदुपश्रुत्य इतरस्सर्व मया विदित सोऽहमिति वक्तु कुतो न शक्यत इति पृष्टवति पुना

राजनि ब्राह्मण उवाच । शब्दोऽहमिति दोषाय नात्मन्येष तथैव तत् । अनात्मन्यात्मविज्ञान शब्दो वा भ्रान्तिलक्षण । जिह्वा ब्रवीत्यहमिति दन्तोष्ठौ तालुके नृप । एते नाह यत सर्वे वाङ्निष्पादनहेतव । किं हेतुभिर्वदत्येषा वागेवाह मिति स्वयम् । तथा पीवानसीत्येतद्वक्तुमित्थ न युज्यते । पिण्ड पृथग्यत पुस शिर पाण्यादिलक्षण । ततोऽह मिति कुत्रैता राजन्सज्ञा करोम्यहम् । यद्यन्योऽस्ति पर कोऽपि मत्त पार्थिवसत्तम । तदैषोऽहमय चान्यो वक्तुमेव मपीष्यते । तदा हि को भवान्सोऽहमित्येतद्विफल वच ' इत्यादि । अत्र को भवानिति प्रश्न प्रष्टृव्यतिरिक्त एव प्रश्नविषय इत्यवगम्यते, अन्यथा प्रष्टुरधिगतस्वस्वरूपस्य वक्तरि को भवानिति प्रश्नायोगात् । तथा च सोऽहमित्या त्मानमधिकृत्य उत्तर न सभवति, आत्मभेदाभावेन प्रष्टृव्य- तिरिक्तस्यात्मनोऽहशब्देन निर्देशायोगात् । नाप्यात्मान्य विषयमधिकृत्योत्तर सभवति, प्रश्नो हि को भवानित्याकारक , तत्र च भवच्छब्दश्च सबोध्यवाची, सबोध्यता च चेतनस्यैव युज्यते, तथा च चेतनविषयक प्रश्नमुपगत्य अचेतनालम्बन- मुत्तर कथ दातु शक्यते— इत्यभिप्रायेण 'शब्दोऽहमिति दोषाय' इत्यादिकमुच्यते । आत्मनि अहशब्दो न दोषा-

येति यत्त्वयोक्तं तत् तथैव; तथापि त्वदीयप्रश्नानुसारि सोऽहमिति उत्तरं तु न घटते, यतो भवदन्यो मदभिन्नो यः समालम्ब्योत्तरं देयमिति हि प्रश्नस्वारस्यादवगम्यते। यस्तावद्भवतोऽन्यो जडो वागादिः स नाहम्; तथा च भवदन्यजिह्वादिभिरहमिति यदि ब्रवीमि तदा अनात्मनि जिह्वादावात्मविज्ञानमात्मज्ञानसाधनमहंशब्दो भ्रान्तिलक्षण एव भवति, चाकारस्यावधारणार्थत्वात्। तदेवोपपादयति—'जिह्वा ब्रवीत्यहम्' इत्यादिना। ननु जिह्वादीनामचेतनानामहमिति संज्ञा प्रत्यविषयत्वेऽपि आत्मैवाहमित्युच्यतां तत्राह—यद्यन्योऽस्तीत्यादिना। परो देहादिविलक्षणः कोऽपि मत्तोऽन्यो यद्यस्ति तदा एषोऽहमयं चाप्य इति वक्तुमपीष्यते, तदेव नेत्याह—यदा समस्तदेहेष्विति। ननु मनुष्योऽहं ब्राह्मणोऽहं देवोऽहं इत्यबाधितप्रत्यक्षेण शरीरादीनाम् अहंत्वावगाहनात् शरीरादयो युष्मन्ताः कथं नात्मेत्याशङ्क्य, देहादीनामसत्यत्वात् आत्मनश्च सत्यत्वात् सदसतोरैक्यायोगात् न देहादीनामात्मत्वमित्याह—'त्वं राजा शिबिका चेयं वयं वाहपुरःसराः। अयं च भवतो लोको न सदेतन्नृपोच्यते' इति। देहादीनामसत्त्वं विकारित्वहेतुना प्राङ्महापटत्वमित्यादिना दर्शितम्; तथैवात्रापि दर्शयति—'वृक्षाद्दारु

ततश्चेय शिबिका त्वदधिष्ठिता । क वृक्षसक्षा यातास्या दारुसक्षाथवा नृप' इत्यादिना 'घ यात छत्रमित्येव न्याय-स्त्वयि तथा मयि' इत्यन्तेन ॥

यत्तु नन्वस्तु देहादिव्यतिरिक्त एवात्मा अहपदवाच्य इत्याशङ्क्य, तस्य सर्वभूतेषु स्थितस्य ज्ञानादिरूपेणैकाकार-त्वात् व्यावर्तकजात्याद्यभावात् सोऽहमिति प्रश्नप्रतिवचने न युज्येते इत्याह— यथान्योऽस्ति इत्यादि । परो विलक्षणो जात्यादिना सर्वदेहषु देवादिदेहेषु एक एकाकार, व्यक्तिनानात्व स्वीकृत्य आकारभेद एव निषिध्यते, अन्यथा एकस्मिन्नन्यपदप्रयोगो न स्यात्, 'निरञ्जन परम साम्य-मुपैति' इत्याद्यनुसारात् ईशस्यापि ज्ञानानन्दादिना मदेकाकारत्वादिति भाव । तदेवाह— पुमान्न देव इत्यादीति। पुमान्न देवो न नरो न पशुर्न च पादप । शरीराकृतिभेदास्तु य एते कर्मयोनय ' इतीति ॥

षदसत्— त्वन्मते मनुष्यत्वादिजातेरात्मन्यपि स्वीकारेण स्वरूपसबन्धरूपजनेरपि स्वीकारेण मनुष्यत्वादिवद्बैत्रत्वादेरपि आत्मगततया पुरुषान्तराधीनोत्पत्तेरपि तत्र सभावितत्वया चैत्रोऽहममुष्य पुत्र इति प्रतिवचने बाधकाभावात् । एते धर्मा आगन्तुका इति चेत्, किं

च्चात:! अथाधितवस्त्ववलम्बनेन प्रविवचनोपपत्तेः । म-
न्मते तु परमार्थं वुबोधयिषोः एवंविधमुत्तरं न घटते ।
अपि च 'तत्र चोत्सृष्टदेहोऽसौ जज्ञे जातिस्मरो द्विजः ।
सदाचारवतां शुद्धे योगिनां प्रवरे कुले । सर्वविज्ञानसंपन्नः
सर्वशास्त्रार्थतत्त्ववित् । अपश्यत्स च मैत्रेय आत्मानं
प्रकृतेः परम् । आत्मनोऽधिगतज्ञानो देवादीनि महामुने ।
सर्वभूतान्यभेदेन स ददर्श सदात्मनः' इत्यादिना ब्राह्म-
णस्य सर्वशास्त्रार्थतत्त्वात्मयाथात्म्यसाक्षात्कारवत्त्वादिविशे-
षितत्वेन, त्वया च जीवेऽपि चिदात्मकशरीरवति स्वा-
भाविकदेवमनुष्यत्वादिजातिभेदस्वीकारेण यथायथं देवो
नरो वा अहमिति वक्तुं शक्यत्वेन सर्वजीवानां ज्ञाना-
नन्दादिना एकरूपत्वेऽपि सोऽहमिति प्रतिवचने कानुप-
पत्तिः ! 'पुमान्न देवो न नरः' इत्यादेरसंगतिश्च । पर
इति च प्रकृतिविलक्षण इत्येवोच्यते, आत्मानं प्रकृतेः
परमित्यस्मिन्नेव प्रकरणे बहुधोक्तेः । 'निरञ्जनः परमं सा-
म्यमुपैति' इत्यस्य च 'ब्रह्म वेद ब्रह्मैव भवति' इत्याद्य-
नुसारात्समं सर्वव्यापकं ब्रह्मोच्यते तद्भावमुपैतीत्यर्थः ।
यद्यपि मुक्तेः प्रागपि साक्षिणो ब्रह्माभिन्नतास्त्येव तथापि
सा न परमा अविद्याद्युपाधिकृतभेदकलुषितत्वात्, तदपाये

तु परमसाम्य सपद्यते इत्यभिप्रायेण परममित्युक्ति , अन्यथा मुक्तस्यापि जगद्व्यापारनिखिलहेयप्रत्यनीकानन्तकल्याणगुणाश्रयत्वनिरङ्कुशसर्वेश्वत्वसर्वनियामकत्ववाङ्मनसातीतानन्दविशेषपरमानन्दशालित्वानन्याधीनत्वादिगुणशून्य तथा यूकाविक्षाडे मेरुमन्दरादिकतिपयगुणसाम्येऽपि परमसाम्यस्यैव मुक्तियोगेऽत्यधमाधमाचेतनपुरुषसाम्यायोगे शकशास्त्रस्य मकुचद्विषयत्वापत्ति । किं बहुना ? ब्रह्मादीनामप्यवमिति शास्त्र न स्वरसमापद्येत । किं च परमसाम्य नैकविध ब्रह्मादिषु सभवति, मुक्तावपि तारतम्यापत्तमादिति यत्किंचिदेतत् । निरञ्जनादिमात्रेण साम्य तु नोक्तरीत्या परमम्, निरञ्जनो भवतीत्यनेनैव पूर्णत्वे परममिति च व्यर्थम् । न ह्यञ्जनसामान्याभावेऽपि तारतम्यमस्ति, येन परमपदसार्थक्य स्यात् , न हि यत्किंचिद्घटवति भूतले निर्घटमिति व्यवहारो युज्यते । 'सर्वभूतान्यभेदेन ददर्श ' इत्युपक्रमानुसारेण व्यक्त्यैक्यविवक्षाया एवोचितत्वाच्च । न च विना कारण सर्वपदसकोचोऽभेदपदस्य वा जघन्यवृत्त्याश्रयण युक्तम् ॥

एवमेतदुपश्रुत्य परमार्थजिज्ञासुना राज्ञा प्रार्थितो ब्राह्मण, कर्मफलादीनां परमार्थता व्युदस्य परमार्थमुपदेष्टुमाह— 'कर्मयज्ञादिक श्रेय परमार्थं तु पृच्छसि' इत्यादिना 'पर-

मार्थो न भेदवान्' इत्यन्तेन । कर्मध्यानादीनां परमार्थतां निषिध्य 'आमुक्तेर्भेद एव स्यात् जीवस्य च परस्य च । मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः' इति मतमपि निरस्यति । 'परमात्मात्मनोर्योगः परमार्थ इतीष्यताम्' यैः कैश्चिदार्यैः । तदपि मिथ्येत्याह— 'मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः' इति । भेदस्य परमार्थसत्त्वे जीवेश्वरात्मकं व्यक्तिद्वयम् प्राग्विद्यादिना तु जीवो ब्रह्मभावमापद्यते इत्युक्तौ अन्यस्य द्रव्यस्य अनात्मता स्यात्, सा च विरुद्धा; भेदमिथ्यात्वे तु जीवो ब्रह्मातिरिक्तं द्रव्यमेव न भवति; किं तु कालत्रयेऽपि तदेव सत् तथात्म्याज्ञानात् भिन्नवदवभासमानः तत्त्वज्ञाननिष्पत्तौ निवृत्तभेदो ब्रह्मात्मना भवतीति युक्तमिति । अत एव 'परमार्थो न भेदवान्' इत्युक्तम्; वक्ष्यति च 'द्वैतिनोऽतथ्यदर्शिनः' इति ॥

एवं कर्मफलप्रभृति पराभिमतमुक्तिपर्यन्तानां परमार्थता व्युदस्ता । ततश्च प्राप्तावसरं परमार्थं निरूपयन् प्रतिजानीते शिष्यावधानाय— 'परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम'। परमार्थमाह— 'एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः । जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः । परज्ञानमयोऽसद्भिर्नामजात्यादिभिर्विभुः । न योगवान्न युक्तो-

ऽभूत्रैव पार्थिव योक्ष्यते । तस्यात्मपरदेहेषु सतोऽप्येकमय हि तत् । विज्ञान परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिन ' इत्यादि । यत्तु अमद्भिरसमीचीनै नामजात्यादिभि द्वैतिन अवतारान्तर्यामित्वादिना ये भेददर्शिन इति, तदसत्, त्वन्मते अधमाधमदु खशून्यतुच्छासदादिपदानामपि ब्रह्मणि समन्वयस्योक्ते, अवतारान्तर्यामित्वादिना ब्रह्मभेदस्य केनाप्यनुपगमात् तन्निषेधानुपपत्ते, विशेषस्यापि भेदरूपताया उक्तत्वात् विशेषमुपेत्य भेदनिषेधस्य कूपपतन यत्नेन परिहृत्य व्याघ्रमुखपतनसाम्यात्र । न हि भेद निषेध्य विशेषाङ्गीकारे कश्चन विशेषोऽस्ति विनामुग्धजनप्रतारणात् इति अन्यत्र विस्तर ॥

एवममेऽपि निदाघऋभुसवादे— ते क निवास क गन्तासि— इति निदाघप्रश्नस्य ऋभुणोत्तर कृतम्— 'पुमान्सर्वगतो व्यापी आकाशवदय यत । कुत कुत्र क गन्तासी त्येतदप्यार्थवत्कथम् । कथम् ? सोऽह न गन्ता नागन्ता नैकदेशनिकेतन ' इति । इदमपि च ते विरुद्धम्, आत्मनोऽणुत्वाभ्युपगमात् । यत्तु पुमान्न गन्तेत्यादि परमात्मपरम्, सोऽह न गन्तेत्यादि जीवपरम्, तथा च परमात्मन्येव विहरामि तं विहाय गमनादिकं न संभवतीति भाव ; द्वितीये च

सोऽहं तृप्त्यार्थं गमनादिकर्ता न भवामीत्यर्थ इति; तद्-सत्, आकाशादीनां व्यापकत्वनिश्चयवतामपि क गन्तासी-त्यवाधितप्रश्नदर्शनेन अन्यव्यापकताया अन्यदेशगन्तृताया-मविरोधितया च क गन्तासीति प्रश्नानुपपत्तौ बीजाभा-वात्; न ह्याकाशादिकं विहायापि गमनं संभवति । मन्मते च निर्मोनिर्विक्रियत्वात् गमनमनुपपन्नम्; कुत इति प्रश्नानुप-पत्तिश्चायमित्यनेन वार्येत; अयमित्यनेनोपाधितो विविक्तत्वात् उपाधिगतक्षुत्तृडादिशून्यतया सार्वकालिकी तृप्तिर्या प्रागुक्ता तदाश्रयस्य परामर्शात्; तथा च नाहं गन्तेत्यादेर्यथा श्रुतस्यै-वोपपत्तौ तृप्त्यर्थमित्यध्याहारोऽपि नाश्रयणीयः । एवं कुतो गन्तासीत्यंशे पूर्वार्धोक्तस्य परमात्मगतव्यापकत्वादेर्हेतुतया तन्मात्रमभिधाय कुतो गन्तेति प्रश्नांशखण्डनायोगश्च । सोऽहं न गन्तेत्यनेन सत्खण्डनं क्रियत इति चेन्न, तथापि पूर्वश्लोक एव कुतः कुत्रेति प्रश्नद्वयखण्डनस्य हेत्वलाभेन संदर्भवि-रोधस्य दुरुद्धरत्वात्॥

एवम् 'निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत्' इत्यत्र अ-द्वैतशब्देन नानावस्थाशून्यो विष्णुरुच्यते; तस्यैव सदैकरूप-रूपायेत्युपक्रान्तस्य 'एवमेकमिदं विद्धि न भेदि सकलं जगत् । वासुदेवाभिधानस्य स्वरूपं परमात्मनः' इति

तस्यैवैकरूपत्वोक्ते, तथा च वासुदेवाभिधानस्य परमात्मन स्वरूपमेवैक सदैकाकार विद्धि, सकल जगदेकाकार न विद्धि, यत एतद्भेदि नानावस्थावदिति व्याख्यानमपि न युक्तम्, एतादृशार्थविवक्षाया वासुदेवमेक विद्धीत्यनेनैव निर्वाहे रूपत्वमत्रैव बहुलम् आम्नातम्, तथा चेद् वासुदेवाभिधानस्य ब्रह्मणो मूर्त्त स्वरूप सकल जगत् भेदि परमात्मव्यतिरेकेण सन्न विद्धि, किं तु एकमभिन्न परमात्मव्यतिरेकेणासदिति विद्धीत्यर्थ । अध्यारोपापवादाभ्या निष्प्रपञ्चताप्रवृत्तिरित्युपपत्तेरेव वासुदेवस्वरूपत्वकीर्तनम् । इत्थ चोपक्रमानुगुण्यं भवति । यद्वा सकल जगत् जीवजात एक वासुदेवस्य स्वरूप विद्धि, वासुदेवस्येति सगुणब्रह्मोच्यते, तस्य स्वरूपमिति तदीय सात्त्विक रूप विवक्षितमिति ज्ञापनाय एकमिति सजातीयभेदशून्यमित्यर्थ । तथा च प्रत्यक्षादिसिद्धबहुत्वजीवत्वादिना उपलक्षिते साक्षिणि ब्रह्माभेदो ज्ञातव्य इति पर्यवस्यति न तु भेदीति विद्धीत्यर्थ । अयमर्थश्चाद्वैतपरोऽभवदित्यत्र विवक्षित । अत एवाग्रिमम् 'सर्वभूतान्यभेदेन स ददर्श तदात्मन' इति अद्वैतपरत्वोपपादन सगच्छते । अभेदेनेत्यस्य रागद्वेषादिराहित्यनेत्यथवर्णन तु न सत्, लक्षणापत्त । 'तथा त्वमपि धर्मज्ञ तुल्या

त्मरिपुबान्धव. । अत सर्वगतं जानन्नात्मानमवनीपते' इत्या-
द्यनुरोधात् द्वेषादिराहित्यमेव भेदशब्दार्थो वाच्य इति न
युक्तम्, तुल्यात्मरिपुबान्धवत्वे हेतुतयोक्तस्य स्वपरदेहेष्वा-
त्माभेदानुसंधानस्य लक्षणादिकं विनाप्यभेदेन ददर्शेत्यत्र
विवक्षासंभवे अभेदशब्दस्य लाक्षणिकत्वायोगात्। सर्व
शरीरेष्वात्मन एकस्यैव सत्त्व सदृष्टान्तमुपपादयति— 'सि
तनीलादिभेदेन यथैकं दृश्यते नभः । भ्रान्तदृष्टिभिरात्मापि
तथैकः सन् पृथक्पृथक्' इति । उक्तमर्थमुपसंहरति—
'एक समस्तं यदिहास्ति किंचित् तदच्युतो नास्ति पर
ततोऽन्यत् । सोऽहं न च त्वं न च सर्वमेतदात्मस्वरूपं त्यज
भेदमोहम्' इति । यदिह किंचिदस्ति अल्पमस्ति तदच्युत
एव, एवमिह यत्परमस्ति तदपि ततोऽन्यन्नास्ति तस्मात्सो
ऽहमित्यादि स्पष्टम् ॥

यत्तु एक सर्वात्मा भ्रान्तदृष्टिभि पृथक्पृथक् देवो
ब्राह्मण इत्यादिरूपेण दृश्यत इति, तदसत्, अहं देवोऽहं
ब्राह्मण इति दृष्टेस्तव मते भ्रान्तिताया अयोगात् । अहं
मनुष्य एवेति दृष्टि भ्रान्तिरिति चेन्न, अहमिदानीं मनुष्य
इति दृष्टेरप्यतथात्वात्, अहं सर्वदा मनुष्य एवेति दृष्टि-
श्च न कस्यापि चार्वाकसमशीलस्य संभवति इति चेत्,

यतस्तत्रापि त्वद्रीत्या अहं मनुष्य इत्यादिदृष्टिर्न भ्रान्तिः, यदि देहाभेदावगाहिनी भ्रान्तिः स्यात् तर्हि देहाभेदभ्रान्तिरेव निरसनीयेत्यायातम्, ओमिति चेत्, तर्हि यथा नभो नीलं दृश्यते एवमात्मापि देहाद्यभिन्नो दृश्यत इत्येव वक्तव्यं न तु पृथक्पृथगिति, सदर्भविरोधात् । यदपि अच्युत इति अच्युतगताधकमिति तन्न, मुख्यार्थहानापत्ते । एवं स इत्यत्रापि । यत्तु अच्युत इत्यादौ प्रथमा सप्तम्यर्थे इति तदपि न सत्, विनाकारणं विभक्तिव्यत्ययादिकल्पनाया अयुक्तत्वात् । पदद्वयलक्षणायामपि न मुख्यार्थत्याग इति अखण्डार्थविचारे वक्ष्याम ॥

' विश्वं सत्यं मघवाना युवोरिदापश्चन प्रमिणन्ति व्रतं वाम् । अच्छेन्द्राब्रह्मणस्पती हविर्नोन्नं युजेव वाजिना जिगातम् ' इति ऋक्संहिताद्वितीयाष्टकवाक्येन देवप्रमितत्वादिरूपतात्पर्यलिङ्गसहकृतेन विश्वस्य मत्यता बोध्यत इत्यपि न युक्तम्, यतो हे इन्द्राब्रह्मणस्पती मघवाना मघवन्तौ, मघमिति धन नाम, विश्वं सत्यं कर्म तद्भवत्वात् अमोघफलत्वाद्वा सत्यमिति कर्मोच्यते, युवयोरित् भवत्सबन्ध्येव, युवामेवोद्दिश्य कर्माण्यनुष्ठेयानीति भाव, यद्वा विश्वं सत्यं सत्याभिन्नं विश्वं युवयोरित् भवन्नियम्यमेव, अथवा युवयोरित् इद सत्य

अमोघम्; अमोघत्वमेवोपपादयति— आपश्चनेत्यादिना । चनेत्यव्ययसमुदायः तस्य चैकपदता 'नहि देवो मर्त्यः' इत्यादौ नहीत्यव्ययसमुदायस्येव अध्यापकसंप्रदायसिद्धा; वां युवयोर्व्रतं संकल्पं आपो व्यापनशीला देवता अपि न प्रमिणन्ति न हिंसन्ति, चनेत्यस्यैकपदत्वेऽपि न क्षतिः; देवा अपि युवयोर्व्रतं प्रमिणन्ति प्रमागोचरीकुर्वन्तीत्यर्थोपगमेपि प्रमात्वस्य व्यावहारिकप्रमासाधारण्येन तद्विषयतायाः पारमार्थिकतयाप्रतिबद्धत्वात्। नः हविर्दध्यादिकं चरुपुरोडाशादिकमन्नं च अच्छ अभिलक्ष्य वाजिना वेगवन्तावश्वाविव युजा युक्तौ सन्तौ जिगात देवयजनमागच्छतम्; अत्रेन्द्राब्रह्मणस्पतिपदेन प्रसिद्धेन्द्रबृहस्पत्योरौपाधिकभेदवतोरैश्वर्यंतल्पयोर्वा ग्रहणमस्तु, सत्यब्रह्माभेदश्च सन् घट इत्यादिमानगम्यं तादात्म्यमिति । एवम्— 'शाकमना शाको अरुणस्सुपर्ण आ यो महश्शूरस्सनादनीलः । यच्चिकेत सत्यमित्तन्नमोघं वसु स्पार्हमुत जेतोत दाता' इति श्रुतिरपि तत्र प्रमाणम्— उक्तरीत्या सत्यपदस्य अमोघार्थपरत्वात्; सत्यमित्यस्य हि विवरणं न मोघमिति । श्रुतेस्त्वयमर्थः— शाकमना शक्मैव शाक्म तेन शाक्मना मनेन शाकः कर्तुं समर्थः, अरुणोऽरुणवर्णः पक्षी

आगच्छतीत्यध्याहार, उपसर्गश्रुते, यो महो महान् शूरो विक्रान्त., अनील. अनीड. नीडस्य अकर्ता नहीन्द्रोऽग्निवत् कुत्रचिदपि यक्षे नीड करोति, एक. सुपर्ण इति रूपकेणेन्द्रमाह, इन्द्र इदमिदानीं कर्तव्यमिति यत् चिकेत तत् सत्यमित् सफलमेव न मोघ न निष्फलम्, स्पार्ह स्पृहणीय वसु धन जयति शत्रुभ्य. सकाशात्, उत अपि च दाता ददाति च स्तोतृभ्य, दावा जेतति तृन्, तेन 'नलोक' इत्यादिषष्ठीप्रतिषेध । न च सत्यशब्दस्य कर्मपरता अप्रसिद्धा, 'यो वै धर्म सत्य वै तत्, तस्मात् धर्म वदन्तमाहु सत्य वदति' इति श्रुते. । न च वैदिकलौकिकप्रसिद्धिभ्या सत्यशब्दस्य परमार्थपरतैवोचितेति वाच्यम्, अन्यपरवाक्ये देवताधिकरणन्यायेन सिध्यतोऽर्थस्य प्रमाणान्तराविरुद्धस्यैव वाच्यत्वात्। यत्नवद्द्वैतश्रुतिविरुद्धा च जगन्मत्यता। 'प्राधान्यस्य दुरुपतोमहानि सत्या सत्यानि करणस्य वोचम्' इत्यत्रापि एषैव रीति, अथेदानीम् अस्य महतस्य त्यस्य सत्यानि महानि महान्ति करणानि कर्माणि प्रावोचमिति तदर्थ ॥ 'सत्य सोऽस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये' इत्यत्रापि, सोऽस्य महिमा सत्य. अमोघत्वं विप्रराज्ये ब्राह्मणप्रधानेषु यज्ञेषु शव.

शमुद्दिश्य गृणे स्तौमीत्यर्थः । 'कविर्मनीषी परिभूः स्वयं-भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः' इत्य-स्यापि; कविः क्रान्तमतीव दृष्टवान् यतश्च मनसा ईष्टे ऊहापोहकुशलः, यतश्च परिभूः पूर्वसृष्टिविपरीतसृष्टिमि-च्छतामसुराणां परिभवसमर्थः सद्भावसमर्थः, ततो हेतो-र्याथातथ्यतः यादृशतादृशभावं प्रतिसंधाय अर्थान् व्यद-धादित्यर्थः, यथातथ्यपदस्य परमार्थपरत्वे तु यथापदम-नर्थकम् । एवं ■ जगत्सत्यताया न कापि श्रुतिः प्रमाणम् ॥

वस्तुतः परोदाहृता व्यासस्मृतिरपि नास्माकं विरुद्धा । तथाहि— अद्भुतत्वात् सत्त्वासत्त्वादिना दुर्निरूपत्वादनि-र्वाच्यं चेत्यं ब्रह्मैव न तद्व्यतिरेकेण सदित्यर्थः । चित् चेतनोऽपि ब्रह्मैव, एतद्विभ्रं तत एव सत्त्वासत्त्वादिना विचा-रासहत्वादेव अचिन्त्यमतर्क्यमप्रमेयमुच्यते, विकारित्वाच्च जगत् न सदित्याह— जगतामित्यादिना । जडत्वादपि न सदित्याह— अशुमत्वत इति, अनानन्दत्वादिरर्थः । असतां दुष्टकरणानां बुद्धिगम्यत्वात् दोषाधीनधीविषयत्वादित्यर्थः; वेदान्तवेद्ये ब्रह्मणि व्यभिचारवारणाय अधीनान्तम् । अमुमेवार्थं स्पष्टयति— नियमेनेत्यादिना । येऽब्रह्माणि स्थिताः बहिश्चित्ताः ते नियमेनासन्तो दुष्टकरणा एव; नियमोक्त्या

नायां तदुपादानकं रजतं स्वयमेव निवर्तते इत्यङ्गीकारात्; किं नाम प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमिति; न च बाध्यं जगदित्यत्र किंचित् मानम् इत्यत्र स्वकीयमूले जगत्पदं सार्थकमिति जयतीर्थेन व्याख्यातम्— तदसत्— ज्ञानप्रयुक्तावस्थितिसामान्याभावकत्वरूपस्य ज्ञाननिवर्त्यत्वस्यास्माभिः शुक्तिरजतादावङ्गीकारात् त्वया तदनभ्युपगमाच्च जगत्पदोपादानवैयर्थ्यात्। किं च न च बाध्यं जगदित्यत्र किंचिन्मानमिति मूलवाक्यस्थबाध्यपदं ज्ञाननिवर्त्यपरतया व्याख्यायेष्टानुसृष्ट्यवलम्बनेन शङ्कागमाधानमकुशलतानिदानम् । आहत्य बाध्यपदस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधपरतया व्याख्यानसम्भवात् । यदपि बाध्यत्वे बाध्यमित्यङ्गीकारात् अबाध्यत्वमेव जगति स्यादिति, तदपि न, समसत्ताकयोरपि भावाभावयोर्विरोधाभावेन बाध्यत्ववति तत्समसत्ताकतदत्यन्ताभावसत्त्वेऽपि तदत्यन्ताभावस्यापि स्वसमानाधिकरणस्वान्यूनसत्ताकाभावप्रतियोगितासम्भवेन बाध्यत्वस्य बाध्यतायामपि बाध्यत्वाभावलक्षणाबाध्यत्वस्य बाध्यत्वानपायात् । बाध्यत्वात्यन्ताभावस्तु न परमार्थतो बाध्यसाधारणात् । न च व्याप्यवृत्तेरत्यन्ताभावस्य तद्वृत्त्यात्मता, मानाभावात् । बाध्यभेदोपलक्षितं स्वरूपं तु मा भवेत् ।

ब्रह्मण्यारोपिता बाध्यता च बाध्यत्वाभावप्रकारकब्रह्मज्ञान-बाध्यत्वात् प्रातिभासिकी; अतस्तत्र बाध्यभेदः निर्दोषः । स च आत्मस्वरूपः अन्यो वेति अन्यदेतत् । एवं बाध्य-बाध्यताकत्वेन बाध्यभेदसाधने, स्वज्ञानबाध्यबाध्यताकत्व-मुपाधिश्चेत्यादि दिक् ॥

यत्तु बाधेन भेदादौ सद्विलक्षणत्व साध्यत इति न युक्तम्; तथा हि— सद्विलक्षणत्वं नाम सत्त्वातिविलक्षणत्वम्, सन्मात्रविलक्षणत्वं वा । नाद्यः, सदनन्वयप्रसङ्गात्, जाति-विशेषस्य त्वया जगति अप्रतिषेधेन बाधापत्तेः; सत्ताजा-त्यादेरनुपगमेऽर्थान्तरादिप्रसङ्गाच्च; न द्वितीय.— अस्मा-भिरपि जगति सद्ब्रह्मवैलक्षण्योपगमेन सिद्धसाधनादिति; तदसत्, प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वस्य सद्वै-लक्षण्यशब्देन विवक्षितत्वात् । अत्रापि परोक्तदोषाभासा अन्यत्र निरस्ता इति । यत्तु भेदस्य त्वयाप्यङ्गीकारात्त-न्निराकरणमयुक्तमिति, तदसत्, यतो निराकरणं पारमा-र्थिकत्वव्युदासः न त्वत्यन्तासत्त्वव्यवस्थापनमिति । सद्विल-क्षणत्वस्य मिथ्यात्वे सत्त्वमेव सत्यं स्यादिति तु प्रागेव दूषितप्रायम् ॥

यदप्यनिर्वाच्यत्वे हेतूक्तं दृश्यत्वमात्मन्यनैकान्तिक-

नाया तदुपादानकं रजतं स्वयमेव निवर्तते इत्यङ्गीकारात्, किं नाम प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमिति, न च बाध्यं जगदित्यत्र किंचिन् मानम् इत्यत्र स्वकीयमूले जगत्पदं सार्थकमिति जयतीर्थेन व्याख्यातम्— तदसत्— ज्ञानप्रयुक्तावस्थितिसामान्याभाववत्स्वरूपस्य ज्ञाननिवर्त्यत्वस्यास्माभि शुक्तिरजतादावङ्गीकारात् त्वया तदनभ्युपगमाच्च जगत्पदोपादानवैयर्थ्यात्। किं च न च बाध्यं जगदित्यत्र किंचिन्मानमिति मूलवाक्यस्य बाध्यपदं ज्ञाननिवर्त्यपरतया व्याख्यायेदमुत्सूत्रव्यवलम्बनेन शङ्कासमाधानमयुक्तत्वानिदानम् । आहत्य बाध्यपदस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधपरतया व्याख्यानसम्भवात्। यदपि बाध्यत्वं बाध्यमित्यङ्गीकारात् अबाध्यत्वमेव जगति स्यादिति, तदपि न, समसत्ताकयोरपि भावाभावयोर्नानाभावेन बाध्यत्ववति तत्समसत्ताकतदत्यन्ताभावसत्त्वेऽपि तदत्यन्ताभावस्यापि स्वसमानाधिकरणस्वान्यूनसत्ताकाभावप्रतियोगितासम्भवेन बाध्यत्वस्य बाध्यतायामपि बाध्यत्वाभावलक्षणाबाध्यत्वस्य बाध्यत्वानपायात्। बाध्यत्वात्यन्ताभावस्तु न परमार्थता बाध्यसाधारणात्। न च व्याप्यवृत्त्यत्यन्ताभावस्य तद्भेदव्याप्यता, मानाभावात्। बाध्यभेदोपलक्षित स्वरूप [illegible] सा भवेत्।

ब्रह्मण्यारोपिता बाध्यता च बाध्यत्वाभावप्रकारकब्रह्मज्ञान-बाध्यत्वात् प्रातिभासिकी; अतस्तत्र बाध्यभेदः निर्बाधः । स चात्मस्वरूपः अन्यो वेति अन्यदेतत् । एवं बाध्य-बाध्यताकत्वेन बाध्यभेदसाधने, स्वज्ञानबाध्यबाध्यताकत्व-मुपाधिरित्यादि दिक् ॥

यत्तु बाधेन भेदादौ सद्विलक्षणत्वं साध्यत इति न युक्तम्; तथा हि— सद्विलक्षणत्वं नाम सज्जातिविलक्षणत्वम्, सन्मात्रविलक्षणत्वं वा । नाद्यः, सदानन्त्यप्रसङ्गात्, जाति-विशेषस्य त्वया जगति अप्रतिषेधेन बाधापत्तेः; सत्ताजा-त्यादेरनुपगमेऽर्थान्तरादिप्रसङ्गाच्च, न द्वितीयः— अस्मा-भिरपि जगति सद्वैलक्षण्योपगमेन सिद्धसाधनादिति; तदसत्, प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वस्य सद्वि-लक्षण्यशब्देन विवक्षितत्वात् । अत्रापि परोक्तदोषाभासा अन्यत्र निरस्ता इति । यत्तु भेदस्य त्वयाप्यङ्गीकारात्त-न्निराकरणमयुक्तमिति, तदसत्, यतो निराकरणं पारमा-र्थिकत्वव्युदासः [illegible] स्वरूपान्तरत्वव्यवस्थापनमिति । सद्विल-क्षणत्वस्य मिथ्यात्वे सत्त्वमेव सत्यं स्यादिति तु प्रागेव दूषितप्रायम् ॥

यदप्यनिर्वाच्यत्वे हेतूक्तं दृश्यत्वमात्मन्यनैकान्तिक-

नाया तदुपादानक रजत स्वयमेव निवर्तते इत्यङ्गीकारात्, किं नाम प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमिति, न च बाध्य जगदित्यत्र किंचित् मानम् इत्यत्र स्वकीयमूल जगत्पद सार्थकमिति जयतीर्थेन व्याख्यातम्— तदसत्— ज्ञानप्रयुक्तावस्थितिसामान्याभावकत्वरूपस्य ज्ञाननिवर्त्यत्वस्यास्माभि शुक्तिरजतादावङ्गीकारात् त्वया तदनभ्युपगमाच्च जगत्पदोपादानवैयर्थ्यात्। किं च न च बाध्य जगदित्यत्र किंचिन्मानमिति मूलवाक्यस्थबाध्यपद ज्ञाननिवर्त्यपरतया व्याख्यायेदृशकुसृष्ट्यवलम्बनेन शङ्कासमाधानमकुशलतानिदानम् । आहत्य बाध्यपदस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधपरतया व्याख्यानसम्भवात् । यदपि बाध्यत्व बाध्यमित्यङ्गीकारान् अबाध्यत्वमेव जगति स्यादिति, तदपि न, समसत्ताकयोरपि भावाभावयोर्मानाभावेन बाध्यत्ववति तत्समसत्ताकतदत्यन्ताभावमस्त्वेऽपि तदत्यन्ताभावस्यापि स्वसमानाधिकरणत्वान्यूनसत्ताकाभावप्रतियोगितासम्भवेन बाध्यत्वस्य बाध्यतायामपि बाध्यत्वाभावलक्षणाबाध्यत्वस्य बाध्यत्वानपायात् । बाध्यत्वात्यन्ताभावस्तु न परमार्थता बाध्यमापारण्यात् । न च व्याप्यवृत्तेस्तदत्यन्ताभावस्य तद्भेदव्याप्यता, मानाभावात् । बाध्यभेदोपलक्षित स्वरूप तु सा भवेत् ।

ब्रह्मण्यारोपिता बाध्यता च बाध्यत्वाभावप्रकारकब्रह्मज्ञान-बाध्यत्वात् प्रातिभासिकी, अतस्तत्र बाध्यभेद निर्बाध । स च आत्मस्वरूप अन्यो वेति अन्यदेतत् । एवं बाध्य बाध्यताकत्वेन बाध्यभेदसाधने, स्वज्ञानबाध्यबाध्यताकत्व-मुपाधिश्चेत्यादि दिक् ॥

यत्तु बाधेन भेदादौ सद्विलक्षणत्व साध्यत इति न युक्तम्, तथा हि— सद्विलक्षणत्व नाम सज्जातिविलक्षणत्वम्, सन्मात्रविलक्षणत्व वा । नाद्य, सदानन्त्यप्रसङ्गात्, जाति-विशेषस्य त्वया जगति अप्रतिषेधेन बाधापत्ते, सत्ताजा-त्यादेरनुपगमेऽर्थान्तरादिप्रसङ्गाच्च, न द्वितीय — अस्मा-भिरपि जगति सद्ब्रह्मवैलक्षण्योपगमेन सिद्धसाधनादिति, तदसत्, प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वस्य सद्वै-लक्षण्यशब्देन विवक्षितत्वात् । अत्रापि परोक्तदोषाभासा अन्यत्र निरस्ता इति । यत्तु भेदस्य त्वयाप्यङ्गीकारात्त-न्निराकरणमयुक्तमिति, तदसत्, यतो निराकरण पारमा-र्थिकत्वव्युदास न त्वत्यन्तासत्त्वव्यवस्थापनमिति । सद्विल क्षणत्वस्य मिथ्यात्वे सत्त्वमेव सत्य स्यादिति तु प्रागेव दूषितप्रायम् ॥

यदप्यनिर्वाच्यत्वे हेतूकृतं दृश्यत्वमात्मन्यनैकान्तिक-

मिति, तन्न, संविद्विषयत्वरूपदृश्यत्वस्यात्मनि अभावात् । यद्यपि वेदान्तवेद्ये तत्र वृत्तिविषयत्वमङ्गीकार्यम्, तथापि पररीतिपर्यालोचने तदपि नावश्यकम्, शुक्तिरूप्यादौ परेण ज्ञानविषयतामनङ्गीकृत्य ज्ञानाकारतास्वीकारमात्रेण रजतं जानामीत्यादिप्रतीतिव्यवहारनिर्वाहोपगमवत् सिद्धान्तेऽपि वेदान्तजन्यवृत्तेरात्मविषयकत्वेऽपि तदाकारतामात्रेणाविद्यानिवृत्त्यादिकार्यस्य निर्वोढुं शक्यत्वादित्यभिप्रायेणाचार्या केचिद्वृत्तिविषयतामेव सद्विविक्ततासाधकहेतुं मन्यते । विस्तरस्तु श्रुतिमतानुमानोपपत्तौ अनुसधेय ॥

एतेन आत्मनो दृक्कर्मत्वाभावे वेदान्तजन्यवृत्ते तज्ज्ञानत्व न स्यात्, तथा चाज्ञाननिवृत्तिप्रसङ्ग , न चात्मनस्तद्विषयत्वेऽपि तदाकारता, यतस्तद्विषयत्वमेव हि तदाकारता, नन्वात्मज्ञान नाम आत्माश्रिताज्ञाननिवर्तकतया॰ स्मसबन्धिज्ञानमुक्तम्, न त्वात्मविषयकम्, न चात्मनो ज्ञानाविषयत्वे अज्ञानस्यापि आत्माज्ञानत्वं दुर्घटमिति वाच्यम्, आत्माश्रिताज्ञानम् आत्माज्ञानमित्यङ्गीकारात्; विषयाश्रितं चाज्ञानमङ्गीक्रियत इति चेत्, न, विषयत्वेनैव घटादिवत् ब्रह्मणोऽपि तदनाश्रयत्वात्; अन्यथा

घटादीनामपि तदाश्रयत्वप्रसङ्गात्; तस्मात् प्रमातृगतमेव अज्ञानं अहमज्ञो घटमहं न जानामीति प्रत्ययाच्च । तमोवद-ज्ञानस्य विषयाश्रितत्वाङ्गीकारे एकेन घटे ज्ञाते तस्यान्यै-रज्ञातत्वं न स्यात्; अज्ञानबहुत्वात् नैवमिति चेत्; न, तथा सति एकाज्ञाने निवृत्तेऽपि अज्ञानान्तरसद्भावात् क-स्यापि घटस्फुरणं न स्यात्; प्रतिपुरुषनियतानियतत्व-कल्पने अदृष्टचरकल्पनाप्रसङ्गात्; किं चात्माज्ञानं यथा-त्माविषयकेणापि ज्ञानेन निवर्तते घटज्ञानेनापि निव-र्तेत; अविषयकत्वाच्च तस्य ज्ञानत्वमपि न स्यात् इत्या-दिकमपास्तम्; आकारताया विषयतानात्मकत्वस्य अत्र अन्यत्र च जयतीर्थादिभिः उक्तत्वेन स्ववचनविरोधात्। तथा हि अत्र तावज्जयतीर्थेनोक्तम्— यदाकारं यद्विज्ञानं स तद्वि-षय इति प्रमितिनिष्ठेयं व्यवस्था इति । यदि हि आकार-तैव विषयता तदा भ्रान्तावपि सादृश्यव्यवस्थाया निरप-वादत्वात्; रजतं दृष्टमिति भ्रममात्रत्वात्; विमतं सत्यं दृश्यत्वात् आत्मवत् इत्यपि प्रयोज्यत्वात्; प्रकरणसम इति च जडतत्ववादिनोक्तम् । शुक्तिरूप्यस्यात्यनिर्वाच्यत्वाभा-वात् साध्यविकलो दृष्टान्तः उक्तप्रकारेण दृश्यत्वाभावात् साधनविकलश्च इति । तथा च आत्माविषयस्यापि ज्ञा-

नस्य आत्माकारत्वं परीत्या न विरुध्यते इति युक्तमुक्तम् ॥
इदं तु बोध्यम्— अज्ञानं द्विविध असत्त्वापादकम् अभाना-
पादकं च ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादपूज्य-
चरणानुग्रहलब्धब्रह्मविद्यावैशद्यस्य श्रीमद्ब्रह्मानन्दसरस्वती
सारस्वतसाम्राज्यानुभवसमेधमानयुक्तिव्रातपारोत्सारित-
विपक्षगिरिनिचयस्य भट्टत्र्यम्बकस्य कृतिषु
गुरुश्रुतिमतोद्योताख्यं प्रकरणं समाप्तम् ॥

